॥ श्रीः ॥

# प्रश्नचण्डेश्वरः

संस्कृतटीका-भाषाटीकासमेतः



श्रीमन्महामहोपाध्यायदैवज्ञरामकृष्णविरचितः




मुद्रक व प्रकाशक-

गंगाविष्णु श्रीकृष्णदास,

अध्यक्ष-"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस, कल्याण-बम्बई.

संवत २०१७] —— [सन् १९६०





500 — 12—60

॥ श्रीहरिः ॥

श्रीमन्महामहोपाध्यायदैवज्ञरामकृष्णविरचितः

# प्रश्नचण्डेश्वरः।

## संस्कृतटीका-भाषाटीकासमेतः।

कर्पूरस्थलनिवासिगौतमगोत्र (शोरि) अन्वयाल-
कृतिदैवज्ञश्रीदुनिचन्द्रात्मजपंडितविष्णुदत्त-
वैदिककृतया संस्कृतविष्णुपदीटीकया
भाषाटीकया च सहितः।

गंगाविष्णु श्रीकृष्णदास,

अध्यक्ष-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण-बम्बई.

संवत् २०१२, शके १८७७.

# विज्ञापनम् ।

श्रीमच्छौर्य्योदार्य्यधैर्यगाम्भीर्य्यादिविश्वगुणराजिरंजितमानसहर्षभरात्समुल्लसित मंगलशब्दपुरः सरगुरुमुखादधीतसाङ्गवेदशास्त्रस्मृतिपुराणेतिहासकर्मकलापकुशलतया प्रवर्तितसततन्त्रपुरोडाशसोमधूमैः क्रमशः पवित्रीकृताधरकषायितोदरपिशङ्गितमूर्द्धजवंध्या मा स्यादिति हेतोः " विद्या ह वै ब्राह्मणमाजगाम " इत्यादिवेदविहितशौचाचारपरीक्षितशीलसच्छिष्यदत्तविद्याभाराशान्तमानसजन्मसु सुधर्मेषु उपहसितलक्ष्मीस्थलनिवासस्थानेषु विद्वज्जनेषु विशेषविद्यासंपन्नभूसुरेषु समुल्लसतु मेऽभ्यर्थना । श्रूयतेऽनुभूयते चेदानीन्तनानां श्रवणकटुवाक्यं यथा सत्यपि चतुर्लक्षज्योतिःशास्त्रसमुद्रे मौक्तिकफलविद्रुमशंखाद्यनेकरत्नानां श्रवणमात्रमेव विद्यते न दर्शनमिति । कृतेऽपि यत्ने गणितक्षाराम्भसा शरीरपूर्तिर्न फलनिष्पत्तिश्चेद्यदि घुणाक्षरन्यायेन फलप्राप्तिरपि श्रूयते सोऽपि सामान्यतया न वैशिष्ट्यादित्यादि प्राकृताप्राकृतानां विशेषतः प्रश्नवितर्कानुपश्रुत्य । अहो सत्यपि सिद्धांतितसूर्येऽन्धकारिता नक्षत्रनाथेऽपि तमिस्रा गुरुशास्त्रेऽपि मौढ्यं दैत्याचार्य्येऽप्यनयो बुधेऽपि बुद्ध्यभावो लोहितांगेऽप्यरक्तता शास्त्रे शनावपि धैर्य्यच्युतिः सकलकर्मसु किमिदमिति विचिंतयतो मे शृणवतीव देवे केनापीश्वरप्रेरितेन पञ्चजनेनातिकालाज्जीर्णः प्राचीनतमः प्रश्नचण्डेश्वरो नाम ग्रंथो भवद्योग्य इति संप्रार्थ्य समर्पितः । असंस्कृतरत्नं मह्यमर्पितं वज्रमसीकृतवैदूर्य्यमिव दृष्ट्वा तमभूतां मनसि हर्षविस्मयौ किमित्यसमाप्ततपश्चरणपरितुष्टेनेव भगवतादत्तमिदमन्यथा कथं न संस्कृतमिति । तदनन्तरं सर्वोपकारक्षममिदं मत्वा लेखकदोषाद्भिन्नक्षरपादच्युतिश्लोकं यथामति संशोध्यासीन्मे मनसि चिंता यद्यपि श्रेष्ठं पुस्तकं तथाप्यल्पवृत्तमर्थबहुलं न सामान्यतया लोकोपकारक्षममिति विविच्य शंकासमाधानसिद्धान्तोदाहरणप्रमाणादिभिः समन्विताऽतिसरला विष्णुपदीनामटीका निर्मिता । ये त्वनभिज्ञा देववाण्यास्तेषामपि सुलभ-

ज्ञानार्थमार्य्यभाषायां च ( भाषाभावार्थटीका ) निर्मिता । अत्र यदबद्धमशुद्धं तद्भवद्भिः परगुणलेशानंदिभिः क्षंतव्यमियभ्यर्थये । अनेन च परब्रह्मपरमात्मा श्रीरामचन्द्रः प्रीयताम् ।

प्रार्थना ।

यदशुद्धमसम्बद्धमज्ञानाच्च कृतं मया ।
विद्वद्भिः क्षम्यतां सर्वं बालत्वादयमंजलिः ॥

कर्पूरस्थलनिवासी–

गौतमगोत्र ( शोरि ) अन्वयालंकृतिदैवज्ञदुनिचन्द्रात्मजः,
पंडित–विष्णुदत्तशर्मा वैदिकः ।



श्रीः ।

# अथ प्रश्नचण्डेश्वरः ।

## विष्णुपदीटीका-भाषाटीकोपेतः ।

श्रीगणेशाय नमः ।

गण्डस्थलीगलितमन्दमदप्रवाहमाद्यद्विरेफमधुरस्वरदत्तकर्णः ।
हर्षादिवालसनिमीलितनेत्रयुग्मो विघ्नच्छिदे भवतु भूतपतिर्गणेशः ॥१॥

विष्णुपदी-शिवं शिवशंकरं पाण्यं गणेशगुहसंयुतम् । गुरुं क श्रीहरिं नत्वा वर्षेऽष्टाब्ध्यङ्कभूमिते ॥ १ ॥ कर्पूरस्थलके रम्ये विष्णुदत्तेन शौरिणा । प्राश्ने कृतार्थविशदा टीका सर्वोकारिणी ॥ २ ॥ युग्मकम् । भूरिगुष्णिक् । मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति । तद्यथा-ग्रंथादौ मध्येऽन्त्ये च मङ्गलमाचरणीयमिति न वाक्पाणिपादचपलादिलक्षणविशिष्टानामाप्तानां न तु श्रुतिस्मृत्याचारविरहितानां प्राकृतानामुपदेशस्तस्माच्छ्रेयस्कामो मङ्गलमाचरेदिति वेदविहितत्वाच्च । मंगलकर्तुः फलनिष्पत्तिर्यथा-रामायणमहाभारताद्यनेकविस्तृतग्रंथानां मङ्गलतः समाप्तिर्दृश्यतेऽन्यथा ग्रंथस्य बहुलतया विघ्नप्राचुर्येण च समाप्त्यभावसम्भावनानिष्पत्तिः यदेवं तन्न मंगलस्य । विघ्नध्वंसं प्रति समाप्तिं प्रति कारणत्वं न दृश्यते तथाहि कादम्बर्य्यादौ सत्यपि मङ्गले समाप्त्यभावः । असति मङ्गले नास्तिकादिग्रंथेषु निर्विघ्नसमाप्तिरतो नाचरणीयं मङ्गलमिति चेन्न कादम्बर्य्यादौ मङ्गलस्याल्पतया जन्मान्तरीयाऽनिष्टस्य च प्राचुर्येण समाप्त्यभावः संपद्यते इति लौकिकानां व्यवहारः । याथार्थ्यतोऽत्रापि समाप्तिर्दृश्यते, पुत्रस्यात्मत्वाभिधानात् । उक्तं च श्रुतिना-"अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि सजीव शरदः शतम् ॥" इति पितापुत्रयोरभेदात्पुत्ररूपेण कादम्बर्य्याः समाप्तिः कृतेति सर्वं विदितम् । कादम्बरीशेषसमाप्तिकामनया उक्तं च तेन-"याते दिवं पितरि तद्वचसैव सार्द्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः । दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एष च मया न कवित्व-

दर्पात् ॥" वा एतत्पर्यंतं ग्रंथं विरच्य तत्प्रतिपाद्यकथाशेषं पुत्राय श्रावयित्वा दिवं गते बाणभट्टे तत्पुत्रेण कथापूरणार्थमुत्तरार्द्धं कृतमिति टीकाकारसंमत्या बीजरूपं कथाशेषं स्वसुखेनैव कथितमिति समाप्तिः संभवत्येव। यदुक्तं नास्तिकादीनामिति। तत्रापि जन्मान्तरीयं मङ्गलं कल्प्यते। यथा अग्न्यभावे महानसादौ अग्निरनुमीयते गोष्ठेषु गावस्तथात्रापि जन्मान्तरीयं मङ्गलं कल्प्यतेऽन्यथा समाप्तिसंभावनाया अभावात् यद्यत्कार्यं भवति तत्कारणसहितमिति न्यायश्च। श्रुतिर्वेदः। स च मंत्रब्राह्मणोभयात्मकः। उक्तं च कात्यायनपरिशिष्टे-" अथ मंत्रब्राह्मणयोर्वेदनामधेयम्" इति। गोभिलेनाप्युक्तोऽयमेव। अथ ग्रंथकृत्समाप्तिकामो गणेशदेवतां स्तौति। [ गण्डस्थलीति ] गंडस्थल्या गलिताः क्षरन्तो ये मन्दं मन्दं मदस्य प्रवाहास्तैर्मदमत्ता ये द्विरेफा भ्रमरपंक्तयस्तेषां यन्मधुरं स्वरं तत्र दत्तं कर्णं येन, हर्षादिव आनन्दमग्नादिव अलसेन निमीलितं ईषन्मीलितं नेत्रयुग्मं येन, भूतानां चराचराणां पतिः स्वामी गणेशः विघ्नानां छिद्रे नाशाय भवतु इति सङ्कलितोऽर्थः। भावार्थस्तु गणेशदेवः सर्वजगत्स्वामी हर्षभरान्निमीलितनेत्रः आनन्दमग्नः स्वगण्डस्थलीमदेन मत्तानाम् अत एव कलराविणां द्विरेफाणां झङ्कारशब्दश्रवणे एकरसतया दत्तकर्णः शृण्वन्नित्यर्थः। वो नश्च विघ्ननाशाय विघ्नस्यात्यन्तनिवृत्तये भवतु कोऽर्थः भूयात्। "आशिषि लिङ्लोटौ" इति सूत्रेण। लोट्प्रयोगः। एतेन किं सिद्धम्-यथा स भगवान् अस्यां वेलायां त्रिविधदुःखातीतः सुखसमुद्रमेवावगाहते तथाऽध्यायिनामपि त्रिविधदुःखात्यन्तनिवृत्तिरूपसुख संपद्यतामिति भावः। प्रकरणार्थस्तु पठितृपाठकानां विघ्नाभावो भवतु। प्रमाणान्यपि प्रदर्श्यन्ते। यथा याज्ञवल्क्यस्मृतौ प्रथमाध्याये-" विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः। गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥" अत एव " आदित्यस्य सदा पूजा तिलकं स्वामिनस्तथा। महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥" जगत्कर्तृत्वे अथर्वशीर्षम्-" ॐ नमस्ते गणपतये त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वं साक्षादात्मासि नित्यम्।" इति। अत्र गौडी रीतिः। तल्लक्षणम्-"समासबहुला गौडी दर्पणे समुदीरिता।" अर्थालंकाराणां मध्ये स्वभावोक्तिस्तल्लक्षणम्-"स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्।" शब्दालंकारे मकाररकारलकाराणां व्यावृत्त्या यमकालंकारोऽपि। यथा-"अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः। यमकं तच्च

पादानामादिमध्यान्तगोचरम् ॥ " इति दण्डी । " पादपादस्यादिमध्यांतगोचरम् " इति वामनः । अत्र वसन्ततिलकानामछन्दस्तल्लक्षणम्–" वसन्ततिलका त्भौ जौ गौ " इति शेषनागः । वृत्तरत्नाकरे तु–"उक्ता वसन्ततिलका तभजा जगौ गः " अर्थात् यस्मिन् चतुर्दशाक्षरे वृत्ते तगण (ऽऽ।) भगण (ऽ॥) जगणौ द्वौ (।ऽ।) (।ऽ।) गुरू (ऽऽ) स्यात् तद्वसन्ततिलकानामच्छन्दो भवति। उदाहरणंतु–"आद्यं द्वितीयमपि चेद्गुरु तच्चतुर्थं यत्राष्टमं च दशमान्त्यमुपान्त्यमन्त्यम्। कामांकुशांकुशित-कामिमतंगजेन्द्रे कान्ते वसन्ततिलकां किल तां वदन्ति ॥ " " देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्गणतो लिपितोऽपि च ॥" देवतावाचकत्वात्तु तगणस्य शुभं फलम् । वा तगणस्याकाशः स्वामी तस्य सर्व-व्यापित्वादस्य शास्त्रस्यापि सर्वव्यापित्वं सिद्धयति यदि वा दैवज्ञानां शून्यस्येष्टत्वात् शून्यस्तुतिर्वा शून्यब्रह्मज्ञानान्मुक्तिरिति यथासंभवं ज्ञेयमलमतिगाहावगाहेन ॥ १ ॥

भाषार्थ–ॐ नमो गणपतये। गण्डस्थली जो कपोल उससे गिरताहै जो (मंद) शनैः २ मदका प्रवाह उसकी सुगंधीके मदसे मत्त भये भ्रमर उनका जो (मधुर) मीठा मीठा (स्वर) शब्द झंकार उसके श्रवणके लोभसे दिया है कर्ण जिन्होंने और हर्ष आनंदसे जो मदका आलस उस करके (निमीलित) मिले हैं दोनों नेत्र जिसके ऐसे भूत जो चरअचर (स्थावर जंगम) उनके स्वामी महाराज गणेश देवता विघ्न जो ग्रन्थकी रचना वा पढना वा पढाना उनमें प्रतिबन्धरूप आदि उन संपूर्ण विघ्नोंके नाशके लिये गणेश भगवान् उद्यत हों अर्थात् विघ्नोंको नाश करें। मंगल तीन प्रकारका होता है । एक वस्तुनिर्देश यथा–'अस्त्युत्तरस्यां दिशि' इत्यादि। जो वर्णनीय वस्तुकोही ले प्रवृत्त होना। द्वितीय नमस्कारात्मक यथा –' मुनित्रयं नमस्कृत्य ' तृतीय आशीर्वादात्मक जैसे 'शंभोर्वः-पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः' यहां आशीर्वादात्मक मंगल है ॥ १ ॥

सत्त्वं रजस्तमश्चैव लाभप्रश्नस्तथैव च। भविष्यति कदा कार्यम-मुकं कार्यमेव च ॥ २ ॥ मूकप्रश्नोऽङ्कप्रश्नश्च नष्टमुष्टिक एव च। गमागमौ तथा यात्रा शीघ्रागमनमेव च ॥ ३ ॥ युद्धं सान्धी रिपुं हन्तुं दुर्गभङ्गस्तथैव च ॥ विवाहः पुत्रप्रश्नश्च ज्ञेयं शुभमथाशु-भम् ॥ ४ ॥ इन्द्रचापः परिवेषो मृगया भोजनं तथा। रविमध्ये चंद्रवर्णो मित्रपक्षस्तथैव च ॥ ५ ॥

इति श्रीदैवज्ञरामकृष्णविरचितप्रश्नचण्डेश्वरे संज्ञाध्यायः प्रथमः ॥ १ ॥

विष्णुपदी-मङ्गलाचरणानन्तरं सम्बन्धाभिधेयप्रयोजनानि सहेतुकानि प्रदर्श्यन्त । तदुक्तं च-"ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । ग्रंथादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥" इति । अथ वेदो वेदाङ्गानि च किमर्थमुद्दिश्य प्रवृत्तानीति । अत्रोच्यते-त्रिविधदुःखात्यन्तनिवृत्तिः सर्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वक्तव्य इति । वेदः प्रवृत्तः । उक्तं च सांख्यदर्शने भगवता कपिलदेवेन-"अथ त्रिविधदुःखात्यन्त निवृत्तिरत्यन्तपुरुषार्थः" इति । वेदस्य यथार्थतो ज्ञानाय प्रवृत्तानि वेदाङ्गानीति, तानि पुनरमुनि शिक्षाकल्पव्याकरणनिरुक्तज्योतिषच्छन्दआत्मकानि षट् । शिक्षा तावत् स्वरव्यञ्जनाभिव्यक्तिलक्षणं पूर्वापराह्नमध्यह्नेषु यथाऽध्येयं तस्य स्वरसौष्ठवयुक्तस्य यज्ञकर्मणि प्रयोग इत्यादि अर्थजातं प्रोवाच । "गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥" इत्यादि । दोषमपि उक्तं च "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तदर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" १. अथ च्छन्दोविचितिस्तु वेदाक्षरपादव्यवस्थालक्षणपरिज्ञाने यथा गायत्र्या वसवः अष्टाक्षररूपः । जगत्या आदित्यो द्वादशाक्षररूपस्त्रिष्टुभो रुद्रा एकादशाक्षररूपःपादः संपद्यत इत्यर्थमाद्रियते । अन्यथा दोषमाह-"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मंत्रेण वा यजति वा अध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते प्रमीयते पापीयान् भवति यातयामान्यस्य च्छदांसि भवन्ति" इति २. विज्ञातच्छन्दसः सम्यगधीतस्याऽमुष्मिन् कर्मणि विनियोग इत्यर्थे कल्पस्य प्रभुत्वं तद्यथा-"इषेत्वेति पर्णशाखां छिनत्ति शाल्मलीं वा ऊर्जेत्वेत्यनुमार्ष्टि" इति ३. व्याकरणाद्विभक्त्यादिपरिज्ञानम् । यथा "प्रयाजाः सविभक्तिकाः कर्तव्या इति न चांतरेण व्याकरणं प्रयाजाः सविभक्तिकाः तस्मादध्येयं व्याकरणम्" इति । "रक्षोहागमलध्वसन्देहाः प्रयोजनम्" इति च महाभाष्यकारः । न च व्याकरणानभिज्ञो विभक्तीर्जानीयादूहितुं वा मंत्रानीति निष्कर्षः ४. अथ मंत्रार्थपरिज्ञाने निरुक्तमाद्रियते । निरुक्तं नाम निर्वचनं मंत्राणां यथा "हिरण्यं कस्माद्धितरमणं भवतीति वा हृदयरमणं भवति वा ह्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हर्य्यतेर्वा प्रेप्साकर्मणः" इति । अन्यथावेदार्थज्ञानाभावे दोषमाह श्रुतिः-"स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञं इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥ यदधीतमविज्ञातं निगदेनैव शब्दयते। अनग्नाविव शुष्कैधो

न तज्ज्वलति कर्हिचित् ॥" ५. अथ श्रुत्युक्तकर्म्मांगभूतकालपरिज्ञानाया-नुषङ्गतश्च शुभाशुभकर्मफलविपाककालपरिज्ञानाय प्रवृत्तं ज्योतिषमिति। उक्तं च तत्रैव-"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः। तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञम् ॥" इति। वराहेणाप्युक्तम्-"होरेत्य-होरात्रविकल्पमेके वाञ्छंति पूर्वापरवर्णलोपात् कर्मार्जितं पूर्वभवे सदादि यत्तस्य पक्तिं समभिव्यनक्ति ॥" इति। अतो लौकिकपारलौकिकाखिलकार्यस्य ज्योतिषज्ञानं विना यथांनुपपत्तेस्तस्मादध्येयं ज्योतिषमिति प्रयोजनम्। आब्रह्मादिमुनिश्चितमिदं वेदा-ङ्गमिति सम्बंधः। लग्नादिना ग्रहसंस्थानदर्शनेन जयपराजयशुभाशुभ लाभालाभा-दिपरिज्ञानमभिधेयमिति ६. अधुना करिष्यमाणग्रन्थे यत्प्रतिपाद्यं तदेव संज्ञारूपेण ग्रन्थादौ ग्रन्थकृन्निबध्नाति-सत्त्वमिति ॥ सत्त्वरजस्तमोभिः सामान्यतः शुभाशुभं निरूपयिष्यामस्तदनन्तरं लग्नाल्लाभालाभम्। मम कार्यं कदा भविष्यति न वेति। मम किं कार्यम्। मूकप्रश्नं, धातुमूलजीवात्मकम्। अर्कप्रश्नम्। नष्टं प्राप्स्यति न वा। किं मम मुष्टिकायां वर्तते। अहं कदा गमिष्यामि। वा प्रस्थितस्य कदा आगमनं स्यात्। तीर्थयात्रा संभवति न वा। शीघ्रागमनं परदेशाद्भविष्यति वा विलंबेन। रिपुणा सह युद्धं भविष्यति वा संधिः। रिपोर्दुर्गभंगो भविष्यति न वा तत्फलं च। मम कन्यायाः पुत्रस्य वा कदा विवाहः। पुत्रोत्पत्तिश्च कदा स्यात्। शुभमशुभं च। इंद्रचापफलम्। उपरागफलम्। मृगयाऽद्य प्राप्स्यते न वा कीदृशी कुत्र वा प्राप्स्यते। अन्नमद्य भक्षयिष्यामि न वेति। किमन्नं भक्षयिष्यामि। रविमध्ये भौमादीनां फलम्। चन्द्रवर्णं तत्फलं च। मित्र पक्षतः सुखम्। सकलशास्त्रविषयं चतुर्भिः श्लोकैः प्रतिपादितमिति ॥ २-५ ॥

इति कर्पूरस्थलीयदैवज्ञदुनिचन्द्रात्मज [ शोरि ] पंडितविष्णुदत्तकृतटीकायां संज्ञाध्यायः प्रथमः ॥ १ ॥

**भाषार्थ**-मंगलाचरणके अनन्तर जो २ वस्तु आगे निरूपण करना है वही संज्ञारूपसे प्रतिपादन करते हैं-प्रथम सत्त्वरजतमसाधन और फल। फिर लाभा-लाभ। इसी प्रकार कार्यप्रश्न। असुककार्य, मूकप्रश्न। अंकप्रश्न। नष्टप्रश्न। मुष्टि-प्रश्न। यात्रा। आगमन। तीर्थादियात्राप्रश्न। शीघ्रागमनप्रश्न। युद्धप्रश्न। संधिप्रश्न। रिपुनाशप्रश्न। दुर्गभंगप्रश्न। कन्यापुत्रविवाहप्रश्न। पुत्रोत्पत्तिप्रश्न। शुभाशुभप्रश्न। इन्द्रचापफल। परिवेशफल। शिकार [ खेट ] प्रश्न। किस स्थानसे कैसी शिकार

आज मिलेगी वा नहीं। आज भोजन मिलेगा वा नहीं और कैसा क्या अन्न खावेंगे। [ रवि ] सूर्यके मध्यमें भौमादिकोंका फल। चन्द्रवर्णसाधन उससे फल-कथन। मित्रपक्षसे सुख। यह सब आगे विस्तारपूर्वक कहेंगे ॥ २-५ ॥

इति श्रीप्रश्नचंडेश्वरभाषाभावार्थे दै० दुनिचन्द्रात्मज [ शौरि ] पं० विष्णुदत्त-वैदिककृते संज्ञाध्यायः प्रथमः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः २.

### अथ सत्त्वरजस्तमोवेलाफलम्।

**यामार्द्धं चन्द्रसंयुक्तं तिथिवारसमन्वितम्। त्रिभिश्चैव हरेद्भागं शेषं सत्त्वरजस्तमः ॥ १ ॥ सत्त्वे शीघ्रं फलं वाच्यं रजोवेलासु मध्यमम्। तमसा निष्फलं कार्य्यं शारदावचनं यथा ॥ २ ॥**

विष्णुपदी-अधुना सत्त्वरजस्तमोवेलातः सामान्यतः प्रष्टुः फलं निर्दिशन्नादौ सत्वरजस्तमोवेलासाधनमेकेन श्लोकेन प्रतिपादयतियामार्द्धमिति। यामस्य प्रहरस्य अर्द्धं "द्वौ यामप्रहरौ समौ" इत्यमरः। तद्यामार्द्धं, यस्मिंश्च राशौ तत्समये चन्द्रः स्थितः स राशिस्तात्कालिकी तिथिर्वारश्च एभिः संयुक्त कार्यम्। तदनंतरं त्रिभिरंकैर्भागो दातव्यः शेषं यल्लब्धं तस्मात्सत्त्वादयो ज्ञातव्याः। अर्थात्प्रहरार्द्धं प्रतिपत्प्रभृतितिथीन्, सूर्यादिवारांश्च एकीकृत्य पिण्डं विधाय पुनस्त्रिभिर्भागो देयः शेष यद्येकांकोपलब्धिस्तदा सत्त्वं, यदि द्वौ तदा रजो, यदि शून्यं तदा तमो वाच्यम्। यथोदाहरणम्-प्रश्नसमये चतुर्थयामार्द्धं तत्संख्याः ४, मीनराशौ चन्द्रःस्थितो मीनस्यान्त्यराशित्वाद्द्वादशा १२ ऽङ्को गृह्यते, तिथिः पंचमी ५, वारो गुरुः ५ एषामैक्यं षड्विंशतिः २६ त्रिभिर्हृते शेषलब्धम् २ द्वौ अतो रजोवेला सिद्ध्यति ॥ १ ॥ सत्त्वादिवेलासाधनानंतरं तासां फलं निरूपयति-सत्त्वे शीघ्रमिति। एवं साधिते सत्त्वे तदा पृच्छकस्य शीघ्रं शुभ भविष्यति लाभादिकमिति वाच्यम्। रजसि शुभं लाभात्मकं मध्यमं, कालान्तरेण भविष्यति संभावना तु कार्यस्य अस्त्येव। यदि तमोवेला संपद्यते तदा लाभादिकं कालान्तरेणापि न भविष्यति कृतेऽपि यत्ने शून्यवच्छून्यसंप्राप्तिरप्राप्तिरिति भावः। अथ कथमुच्यते 'सत्त्वे शीघ्रं शुभं भवतीति' कथं नोक्तं तत्र-'तमसि शीघ्रं शुभं भवति इति केन वा क्रमो

विधीयते सत्त्वरजस्तमसामिति।' अत्रेदमुच्यते-सत्त्वस्य सर्वोपरि वर्तित्वाल्लघुत्वात्प्रकाशकत्वाच्च सत्त्वस्य तमसा सह अत्यंताभावात् कारणवत्कार्यमिति न्यायाच्च सत्त्वस्य शुभं कार्य्यं लघुत्वाच्छीघ्रं प्रकाशकत्वाद्भविष्यतीत्यनुमीयते। एवमेव रजसः सत्त्वात्किंचित्तन्न्यूनत्वात् सर्वं मध्यममिति। तमसोऽन्धकारविशिष्टत्वात्सत्त्वरजोभ्यां भेदात् कृतेऽपि यत्ने निष्फलमिति ज्ञायते॥ "अन्धं तम इति न दृश्यते दर्शनम्" इति नैरुक्ताः। उक्तं च सांख्यतत्त्वकौमुद्याम्-"सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरुवर्णकमेव तमः प्रतीपवच्चार्थतो वृत्तिः॥" अनया कारिकया च उत्क्रमं निषिध्य सत्त्वादीनां क्रमो विधीयते। अन्यच्च "सत्त्वरजस्तमसाम्" इत्यादिसांख्यसूत्रम्। सत्त्वं रजस्तमश्चैवेत्यादि पंचमश्लोके। अनुष्टुप्छंदस्तल्लक्षणं पिंगलसूत्रे अनुष्टुप्। गायत्र्या अष्टाक्षररूपैश्चतुर्भिः पादैरनुष्टुप्छंदो भवतीत्यर्थः॥२॥

भाषार्थ-यामार्द्ध जो प्रहरका अर्द्ध वह जिस राशिमें चंद्रमा स्थित होय उस राशिसे युक्त कर उसमें तिथि और वार प्रश्न समयका मिलाय देवे फिर तीन अंकसे भाग दे जो शेष बचे उसमें सत्त्वादि कहे। अर्थात् यदि एक अंक बचे तो सत्त्व कहे, दो अंक बचे तो रज कहे, शून्य बचे तो तम कहदें। उदाहरण-जैसे यामार्द्ध चार ४ हैं, चन्द्रमा मीनका, मीनके द्वादश अंक १२ तिथि पंचमी ५ के पांच, वार बृहस्पतिके ५ पांच अंक इनको जोडा तो छब्बीस २६ भये फिर तीनसे भाग दिया शेष बचे २ अंक तो रजवेला सिद्ध भई॥१॥ अब इनका फल यदि सत्त्ववेला प्रश्नकालमें होय तो शुभकार्य शीघ्र होगा, लाभ मित्रता धनप्राप्ति आदि। यदि प्रश्नसमय रजवेला होय तो शुभकार्य कुछ काल पाकर होगा। यदि प्रश्नमें तमवेला प्राप्त हो तो यत्न करनेपरभी शुभकार्य नहीं होगा। यह सर्वकार्यके लिये सामान्य प्रश्न है विशेष आगे लिखेंगे॥२॥

अथ लाभप्रश्नः।

शीतांशुलग्नेश्वरवित्तनाथाःपरस्परं संयुतवीक्षिताश्च। धनत्रिकोणोदयगा यदा स्युस्तदार्थलाभं प्रवदेन्नराणाम्॥३॥ लग्नलाभपती लग्ने लाभे वा लग्नलाभपौ। लग्ने लाभाधिपो वापि लाभे लग्नाधिपो भवेत्॥४॥एकोऽपीह यदा योगस्तदा लाभं सुनिश्चितम्। चंद्रयोगे विशेषेण लाभः स्वामिस्वरूपतः॥५॥

विष्णुपदी-अथ शुभाशुभं सामान्यतो निरूप्याऽधुना नवभिः पद्यैर्लाभो भवि-

ष्यति न वेति पृच्छकं प्रति लाभालाभमाह-शीतांशुरिति । शीतानि शीतलानि अंशवः किरणानि यस्य सः, लग्नस्य मूर्त्तेरीश्वरः स्वामी च, वित्तं धनं तत्स्वामी; ते चन्द्रलग्नेशधनेशाः परस्परमन्योन्यं संयुताः संयुक्ताश्चकाराद्वीक्षिताः पूर्णदृष्ट्या दृष्टाः सन्तो धने द्वितीयस्थाने, त्रिकोणे नवपञ्चमे, उदये लग्ने गताः प्राप्ता यदि स्युस्तदा तस्मिन्काले नराणां पृच्छकानामिति संबंधः । अर्थस्य धनस्य लाभं प्राप्तिं प्रवदेत् निश्चितं ब्रूयादित्येको योगः । वीक्षिताश्चेत्युक्तेः प्रसङ्गतो ग्रहाणा वीक्षणक्रमो निरूप्यते । शनैश्चरस्य दृष्टिर्लग्नतस्तृतीयदशमे । बृहस्पतेर्नवमपंचमस्थाने । अङ्गारकस्य चतुर्थाष्टमस्थाने । सूर्यबुधचंद्रशुक्राणां सप्तमस्थाने दृष्टिः पूर्णा भवति । उक्तं च बृहज्जातके-" त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयंति चरणाभिवृद्धितः । रविजामरेज्यरुधिराः परे च ये क्रमशो भवंति किल वीक्षणेऽधिकाः ॥ लग्नेशा-

उदाहरणार्थं दृष्टिचक्रम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| ७ | ७ | ४\|८ | ७ | ९\|५ | ७ | ३\|१० | पूर्णदृष्टिः |
| ३<br>१० | ३<br>१० | ७ | ३<br>१० | ४<br>८ | ३<br>१० | ५<br>९ | त्रिपाददृष्टिः |
| ९<br>५ | ९<br>५ | ३<br>१० | ५<br>९ | ७ | ५<br>९ | ८<br>४ | अर्द्धदृष्टिः |
| ८<br>४ | ८<br>४ | ५<br>९ | ८<br>४ | ३<br>१० | ८<br>४ | ७ | पाददृष्टिः |

दिकथनाद्राशिस्वामिनश्च तत्रैव-" क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः । सुरगुरुमन्दसौरिगुरवश्च गृहांशकपाः ॥ " इति । अत्रोपजातिच्छंदतल्लक्षणम् । उक्तं च वृत्तरत्नाकरे-"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । " ॥ ३ ॥ अथ लग्नस्वामी लग्नेशः लाभपतिरेकादशेशो यदि लग्ने स्यातामिति द्वितीयो योगः । वा लग्नेशलाभपो लग्नैकादशेशौ लाभे एकादशस्थाने स्यातामिति तृतीयो योगः । वा लाभस्वामी लग्नस्थाने इति चतुर्थो योगः । वा लग्नेशो लाभस्थाने भवेदिति पञ्चमो योगः । यद्येषु मध्ये प्रश्नकाले एकोऽपि योगो भवेत्तदा निश्चयेन धनलाभः स्यात् । यदि चन्द्रो योगकर्त्ता तदा विशेषेण लाभः स्वामिस्वरूपतो ज्ञेयः । यद्यस्य ग्रहस्य रूपमुक्तं तदनुसारतो लाभः स्यादिति भावः । स्वामि-

स्वरूपमित्युक्तेः स्वामिनो, रूपवर्णदिक्स्थानवस्त्रधात्वादिकं गृह्यते । यथा प्रष्टुः प्रश्नकाले सूर्यो लाभकर्ता तदा तरुणकमलमुखात् ताम्रं वा ताम्रवद्वर्णं पूर्वदिक्सकाशात् देवस्थानात् । धातु ताम्रं, वस्त्रं स्थूलम् और्णकं वा, मूलं रक्तात्मकादीनां लाभः स्यात् । एव-

उदाहरणार्थं चक्रम् ।

| मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. | द्वादशरा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मं. | शु. | बु. | च. | सू. | बु. | शु. | मं. | बृ. | श. | श. | बृ. | स्वामिनः |

मन्येषामपि ग्रहणां स्थानादिग्वलतो वस्तु लाभो ज्ञेयः । अतो ग्रहाणां स्वरूपादिकं प्रदर्श्यते बृहज्जातके यथा—" रक्तश्यामो भास्करो गौर इन्दुर्नात्युचाङ्गो रक्तगौरश्च वक्रः । दूर्वाश्यामो ज्ञो गुरुर्गौरमात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ १ ॥ " सामान्यतो निरूप्य ग्रहाणां स्वरूपं विशेषतः प्रतिपादयति—"मधुपिङ्गलदृक् चतुरस्रतनुः पित्तप्रकृतिः सविताऽल्पकचः । तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक्छुभदृक् ॥ १ ॥ क्रूरदृक्तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः । श्लिष्टवाक्सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च ॥ २ ॥ बृहत्तनुः पिंगलमूर्द्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः । भृगुः सुखी कांतवपुः सुलोचनः कफानिलात्मा सितवक्रमूर्द्धजः ॥ ३ ॥ मन्दोऽलसः कपिलदृक्कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा । स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसा च मज्जा । मंदार्कचंद्रबुधशुक्रसुरेज्यभौमाः ॥४॥ ग्रहाणा स्थानानि यथा—"देवांब्वग्निविहारकोशशयनक्षित्युत्करेशाः क्रमाद्वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं स्फाटितम् ॥ ताम्रं स्यान्मणिहेमयुक्तरजतान्यर्कात्तु मुक्तायसी द्रेष्काणैः शिशिरादयः शशुरचङ्गवादिषूद्यत्सु वा॥१॥" ग्रहाणां दिशः—"प्रागाद्या रविशुक्रलोहिततमःसौरेंदुवित्सूरयः॥ " ग्रहाणां जातयः-"विप्रादिनः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यजानाम् । " इति । दिङ्मात्रमिदं दर्शितं विस्तरस्तु तत्रैव दृष्टव्यः ॥ ४ ॥ ५ ॥

| सू. | चं. | मं. | बुध. | बृ. | बृ. | श. | प्र. |
|---|---|---|---|---|---|---|---|
| ताम्र | श्वेत | अतिरक्त | हरित | पीत | चित्र. | कृष्ण | वर्णाः |
| अग्नि. | जल | कुमार | विष्णु | इंद्र | इंद्राणी | ब्रह्मा | स्वामिनः |

| बु. श. नपुंसक | | चं. शु. स्त्री | | सू. मं. बृ. पुरुष | |
|---|---|---|---|---|---|
| मं. | बु. | बृ. | शु. | श. | ग्र. |
| अग्नि | पृथ्वी | आकाश | जल | मरुत | तत्वानि |

| शु. बृ. | सू. मं. | चं. | बु. | शनि |
|---|---|---|---|---|
| ब्राह्मण | क्षत्रिय | वैश्य | शूद्र | चंडालादिकोंका स्वामी। |

| चं. सू. बृ. | बु. शु. | मं. शु: |
|---|---|---|
| सत्वगुण | रजोगुण | तमोगुण |

| सूर्य | शुक्र | मंगल | राहु | शनि | चंद्र | बुध | बृह. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| पूर्व | अग्निको. | दक्षिण | नैऋति. | पश्चिम | वायु. | उत्तर | ईशान | स्वामि |

**भाषार्थ**-( शीतांशु ) चन्द्रमा ( लग्नेश्वर ) लग्नेश ( वित्तनाथ ) धनेश्वर ग्रह आपसमें संयुक्त वा वीक्षित होंय, ( धन ) दूसरे ( त्रिकोणे ) नवम पंचममें, ( उदय ) लग्नमें स्थित होवे तो प्रश्नकर्ताको ( अर्थ ) धनका लाभ कहदे १ ॥ ३॥ अथवा लग्नेश लाभेश लग्नमें होंय २, वा लग्नलाभका स्वामी एकादशस्थानमें होय ३, वा लाभेश लग्नगत हो ४, अथवा लग्नेश लाभमें हो ५, अर्थात् इन पाँचों योगोंमेंसे एकभी योग होय तो धनका लाभ निश्चयसे कहे, यदि चंद्रमा योगकर्ता हो तो विशेषकर लाभ स्वामीके स्वरूपके अनुसार होता है ॥ ४ ॥ ५ ॥

**लग्नलाभपयोर्दृष्टिर्लाभे लाभकरी मता । लाभः सर्वखगैर्दृष्टो लाभः पूर्णो भवेत्तदा ॥ ६ ॥ लग्नेशो यदि धर्मेशः शुभदृष्टियुतोऽपि वा । लग्नपो वा त्रिकोणस्थश्चन्द्रर्क्षे क्षेमकारकः ॥ ७ ॥**

**विष्णुपदी**-योगफलं निरूप्याधुना दृष्टितो लाभादिकमाह-लग्नलाभपयोरिति । यदि लाभे एकादशस्थाने लग्नेशलाभेशयोः पूर्णदृष्टिः स्यात्तदा पूर्णो लाभः स्यात् । वा सर्वखगैर्ग्रहैर्लाभे दृष्टः लाभस्थाने सर्वग्रहाणां दृष्टिरिति भावस्तदापि पूर्णो लाभो भवेत् । न्यूने न्यूनं विजानीयादिति शेषः ॥ ६ ॥ यदीति पक्षान्तरम् । लग्नेशो लग्नस्वामी धर्मेशो धर्मस्वामी शुभैर्दृष्टो वा युक्तः अथवा लग्नेशश्च चन्द्रराशौ संभूय त्रिकोणस्थो नवपंचमस्थः स्यात्तदा क्षेमकारको भवति । अनायासेन धनादिप्राप्तिः संगम्यत इति भावः । त्रिकोणमित्युक्ते त्रिकोणादिज्ञानार्थं श्लोकः प्रदर्श्यते । जातकालंकारे यथा-"आद्यं तुर्यं कलत्रं दशममिह बुधैः केंद्रमुक्तं त्रिकोणं पुत्रं धर्माख्य-

सुतं पणफरमुदितं मृत्युलाभात्मजार्थम् । धर्मं चामोक्लिमाख्यं व्ययरिपुसहजं कंटकाख्यं हि केन्द्रं चैतच्चातुष्टयं स्यात्त्रिकमिह गदितं वैरिरिष्फान्तकाख्यम् ॥ १ ॥" "कुशलं क्षेममस्त्रियाम्" इत्यमरः ॥ ७ ॥

भाषार्थ-अब दृष्टिसे लाभ निरूपण करते हैं-( लाभ ) एकादशस्थानमें लग्नेश और लाभेशकी पूर्ण दृष्टि होय तो लाभ होता है। वा ( लाभ ) एकादशस्थानको संपूर्ण शुभग्रह पूर्णदृष्टिसे देखें तो पूर्ण लाभ होताहै ॥ ६ ॥ अथवा लग्नका स्वामी और ( धर्म ) नवम स्थानका स्वामी ( शुभग्रह ) पूर्णशशी, बुध, शुक्र, बृहस्पति इनसे युक्त होय वा इनकी दृष्टि होवे तो लाभ होता है। अथवा ( लग्नेश ) लग्नका स्वामी ( त्रिकोण )नवम पंचम स्थानस्थित होय यदि चन्द्रमाकी राशि कर्क उसमें पडा हो तो ( क्षेम ) कल्याणका करनेवाला होता है। यदि पूर्ण योग न होवे वा पूर्ण दृष्टि न होय तो यथाकथंचित् न्यूनयोगमेंभी लाभ होता है इस लिये विचारकर कहना बनता है ॥ ७ ॥

चरे दूरं विजानीयात्स्थिरे लाभश्च मंदिरे । द्विस्वाभावे द्विलाभः स्याद्ग्रहयोगवशात्पुनः ॥ ८ ॥ चंद्रो लग्नपतिर्वापि धनस्थानगतो यदि । तदा तु धनलाभः स्याद्विपरीतो ह्यलाभकृत् ॥ ९ ॥

विष्णुपदी-अधुना राशितो दूरादिज्ञानपूर्वकलाभमाह-चरे दूरमिति। पूर्वयोगेषु यदि चरराशिर्लग्नं लाभस्य तत्स्वामियोगे दृष्टे वा दूरदेशाद्धनादिकस्य प्राप्तिर्ज्ञातव्या, स्थिरराश्युदये स्वस्थानादेव प्राप्तिः । द्विस्वभावराशितो गृहाद्दूरादाराच्च धनादिप्राप्तिर्ज्ञातव्या । के चरस्थिरद्विस्वभावाश्च राशय इत्युक्ते चरस्थिरद्विस्वभावक्रूरसौम्यपुरुषस्त्रीसंज्ञा राशीनां पूर्वादिस्वामित्वं प्रयोजनप्राप्तौ निरूप्यते। यथा-मेषकर्कतुलामकरराशयः चरसंज्ञकाः । मिथुनकन्याधनुर्मीनराशयो द्विस्वभावाः । वृषसिंहवृश्चिककुम्भराशयः स्थिराज्ञेयाः । एवमेव मेषः क्रूरो, वृषः सौम्य इत्यादिक्रमेण क्रूरसौम्याः । मेषः पुरुषो, वृषः स्त्री एवमादिपुरुषस्त्रीसंज्ञका ज्ञेयाः। मेषः पूर्वस्वामी । वृषो दक्षिणस्य । मिथुनः पश्चिमस्य । कर्क उत्तरस्य । पुनरप्येवं सिंहधनुषी पूर्वस्य । कन्यामकरौ दक्षिणस्य । तुलाकुंभौ पश्चिमस्य । मीनवृश्चिकौ उत्तरस्य स्वामिनौ ज्ञेयौ । उक्तं च वराहेण बृहज्जातके-"क्रूरः सौम्यः पुरुषवनिते ते चरागद्विदेहाः प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः ।" इति । इत्यनेन किं निष्पन्नं, यदि मेषचरराशिलग्ने लग्नेशेन

वा लाभेशेन दृष्टे तदा धनादिकस्य दूरात्पूर्वदिक्तः कस्माच्चित्साहसिकात्क्रूरस्वभाव संपन्नपुरुषात्प्राप्तिः, वृषश्चेत्तदा स्वस्थानाद्दक्षिणदिक्सकाशात् सौम्यसौंदर्यवतीस्त्री-द्वारा लाभः, एवमग्रेऽप्यूह्यम् ॥ ८ ॥ अथ चंद्रमुद्दिश्य लाभालाभमाह—चन्द्रो लग्न-पतिरिति । चन्द्रो हिमांशुर्वा लग्नपतिर्लग्नेशो यदि धनस्थितः स्यात्तदा लाभो भवि-ष्यति । यदि चन्द्रमा लग्नेशो भूत्वा धनस्थाने तदा शीघ्रं प्रभूतधनलाभ आक्षिप्यते। अथ विपरीतः प्रतिकूलः । अन्यत्र स्थितस्तदा न लाभं करोति अप्राप्तिर्धन-स्येति ज्ञेयम् ॥ ९ ॥

| मं. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | मं. | कुं. | मी. | रा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क्रूर | साम्य | क्रूर | सौ. | क्रूर. | सौ. | क्रूर | सौ. | कूर | सौ. | कूर. | सौम्य | स्वभाव |
| चर | स्थिर | द्वि. | चर. | स्थि. | द्वि. | चर | स्थि. | द्वि. | चर | स्थि | द्वि. | संज्ञा |
| पु. | स्त्री | पु | स्त्री | पु. | स्त्री. | पु. | स्त्री | पु. | स्त्री | पु. | स्त्री | जाति |
| पूर्व | द. | प. | उ. | पूर्व. | द. | प. | उ. | पूर्व. | द. | प. | उ. | देवस्वा. |

**भाषार्थ**—यदि प्रश्नलग्नमें चरराशि होय तो दूर स्थानसे धनप्राप्ति कहो । यदि प्रश्नलग्नगत स्थिरराशि होय तो अपने नगर वा स्थानसे कहना । यदि द्विस्वभाव राशि लग्नगत होय तो दूर और समीपसे धनप्राप्ति कहनी चाहिये । परंतु प्राप्ति धनकी ग्रहोंके योगद्वारा होती है ॥ ८ ॥ चन्द्रमा वा लग्नेश यदि ( धनस्थान ) द्वितीय स्थानमें हो तो निश्चयसे धनादिकोंका लाभ होता है यदि ( विपरीत ) अन्यस्थानस्थित हो तो लाभकारक नहीं होता ॥ ९ ॥

धने धनपतिर्लग्ने वित्तपो धनलाभकृत् । धने शुक्रेंदुगुरवो धनेश-
सहिता यदि ॥ १० ॥ लग्ने लाभेशसंदृष्टे लाभे शुक्रो गुरुर्विधुः ।
लाभो भवति भाग्ये वा धने वा चंद्रयोगतः ॥ ११ ॥

## इति प्रश्नचण्डेश्वरे लाभालाभाध्यायो द्वितीयः ॥ २ ॥

**विष्णुपदी**—धने धनस्थाने द्वितीये धनपतिर्धनेशः । वा लग्ने लग्नस्थाने वित्तपो धनेशस्तदा धनलाभकारको भवति । अथवा शुक्रो भृगुः इंदुश्चन्द्रमाः, गुरुर्बृह-स्पतिस्ते धनेशेन युक्ताः सन्तो धनस्थाने स्युस्तदाऽपि धनलब्धिर्भविष्यति । अथवा लग्ने लाभेशदृष्टे पूर्वोक्तग्रहा लाभे, भाग्ये भाग्यस्थाने नवमे, वा धने द्वितीयस्थाने स्युश्चन्द्रयोगतो लाभो भवति इति भविष्यदर्थे । अन्यदप्युक्तं

षट्पंचाशिकायाम् " केंद्रत्रिकोणेषु शुभस्थितेषु पापेषु केंद्राष्टमेवर्जितेषु । सर्वार्थसिद्धिं प्रवदेन्नराणां विपर्ययस्थेषु विपर्ययः स्यात् ॥ त्रिपंचलाभास्तमयेषु सौम्या लाभप्रदा नेष्टफलाश्च पापाः । तुलाऽथ कन्या मिथुनं घटश्च नृराशयस्तेषु शुभं वदंति ॥ " ॥ १० ॥ ॥ ११ ॥

इति श्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शोरि ) अन्वयालंकृतिदैवज्ञदुनिचंद्रात्मजपंडितविष्णुदत्तवैदिककृतप्रश्नचंडेश्वरटीकायां लाभालाभाध्यायोद्वितीयः ॥ २ ॥

भाषार्थ-द्वितीयभावका स्वामी द्वितीयमें हो और द्वितीयेश लग्नमें हो तो धनलाभ करता है अथवा धनस्थानमें शुक्र, चन्द्र और गुरु धनेशसे युक्त होकर बैठे हों तो लाभ होता है। अथवा लाभेश लग्नको देखे और शुक्र, बृहस्पति, चन्द्रमा एकादश, नवम तथा द्वितीय स्थानमें हो तो चन्द्रयोगसे लाभ होता है ॥ १० ॥ ११ ॥

इति श्रीदैवज्ञदुनिचन्द्रात्मजपं० विष्णुदत्तविरचिते प्रश्नचंडेश्वरभाषाभावार्थे लाभालाभाध्यायो द्वितीयः ॥ २ ॥

---

## अथ तृतीयोध्यायः ३.

मम कार्यं कदा भविष्यतीति प्रश्ने ।

**पश्येद्विलग्नं यदि लग्ननाथः कार्याधिपः कार्यगृहं प्रपश्येत । कार्येश्वरं लग्नपतिस्तनूपं कार्येश्वरं सिद्धिमुपैति कार्यम् ॥ १ ॥**

विष्णुपदी-मम कार्यं कदा भविष्यतीति प्रश्ने कार्यसिद्धिमाह-पश्येद्विलग्नमिति । यदि लग्नस्यनाथः स्वामी विशेषेण पूर्णदृष्ट्या लग्नं पश्येत्कार्याधिपः कार्यगृहं स्वगृहं प्रकर्षेण पश्येदित्येको योगः । लग्नपतिर्लग्नस्वामी कार्येश्वरं कार्यस्वामिनं पश्यति तथा लग्नेश्वरं कार्येश्वरः पश्यति तदा कार्यं सिद्धिमुपैति शीघ्रमिति । अत्रेन्द्रवज्रा नाम च्छन्दः । तल्लक्षणम्-"स्यादिन्द्रवज्रा यदि तौ जगौ गः । " अर्थात् यदि तगणौ द्वौ ( ऽऽ। ) ( ऽऽ। ) जगण ( ।ऽ। द्वौ गुरू ( ऽऽ ) स्यातां तदिन्द्रवज्रानामच्छन्दो भवति ॥ १ ॥

भाषार्थ-यदि लग्नका स्वामी लग्नको देखे और कार्येश कार्यगृहको देखे

अथवा कार्येश्वरको लग्नेश देखे और लग्नेशको कार्येश देखे तो कार्य सिद्धिको प्राप्त हो जाता है ॥ १ ॥

अथ मूकप्रश्नः ।

**इष्टमङ्कं द्विगुणितमेकेन सह संतयुम् ॥ त्रिभिश्चैव हरेद्भागं शेषं च फलमादिशेत् ॥ २ ॥ विषमाङ्के जीवचिन्ता समे धातोः प्रकीर्तिता ।**
**शून्ये मूलं विजानीयाच्छारदावचनं यथा ॥ ३ ॥**

विष्णुपदी-अथ मूकप्रश्नं प्रथममिष्टत आह-इष्टमङ्कमिति । इष्टमङ्कं सूर्योदयादारभ्य पृच्छकस्य प्रश्नकालमितघटिकात्मकं कालं द्विगुणीकृत्य एकाङ्केन सह संयुतं कार्यं तदनन्तरं त्रिभिरङ्कैः भागो देयः लब्ध यत्तस्मात् क्रमतः फलं वाच्यम् । तत्र यदि विषमाङ्कोपलब्धिः स्यात्तदा जीवाचिंतां जीवसंबन्धिनीं चिंतां प्रवदेत् । यदि समाङ्कस्य दर्शनं भवेत्तदा धातुसंबंधिनीं चिंतां वदेदेवं शून्ये लब्धे मूलं जानीयाद्यथा शारदावचनं शारदाप्येवं वक्ति इति भावः । एतेन ग्रन्थकर्तुः शारदा इष्टं ध्वन्यते । एवमग्रेऽप्यूह्यम् । वा सरस्वतीप्रणीतप्रश्नग्रंथस्याशयं संगृह्यानेनायं ग्रन्थो निरमायि । यथोदाहरणम्-इष्टं विंशतिः २० घटिकात्मक तद्द्विगुणितं चत्वारिंशत् ४० घटिकात्मकं जातं, पुनरेकेन १ संयुतम् एकचत्वारिंशन्मात्रकं ४१ जातं पिण्डं त्रिभिर्हृतं लब्धं द्वौ तदा धातुचिंता तव मनसि वर्तते इति वक्तव्यम् । एकलब्धे एवं जीवं, शून्ये मूलं वाच्यम् ॥ २-३ ॥

भाषार्थ-इष्ट अंकको दुगुना ( द्विगुणित ) कर एक और मिलाय तीनसे भाग देना जो लब्ध हो उससे फल कहना । यदि विषम अंक १ लब्ध हो तो जीवसंबन्धी चिंता, यदि सम अंक मिले तो धातुचिन्ता जाननी, यदि शून्य मिले तो मूलचिंता कहनी चाहिये । उदाहरण जैसे-इष्ट अंक २० वीस घटी इनको द्विगुणित किया तो ४० चालीस भये, १ और जोडा तो ४१ इकतालीस भये तीनसे भाग दिया तो लब्ध भये दो तो प्रश्नकर्ताके मनमें धातुचिंता कहे ॥ २-३ ॥

**व्योमदृष्टिर्भवेज्जीवो मूलं भूम्यवलोकनम् । समावलोकने धातुर्ज्ञेयं केवलदृष्टितः ॥ ४ ॥**

विष्णुपदी-अथ प्रकारान्तरेण दृष्टितो धातुमूलजीवमाह-व्योमदृष्टिरिति । आगमनकाले प्रष्टुर्यदि व्योमदृष्टिराकाशम् ऊर्ध्वं वा निरीक्षते तदा अस्य मनसि जीव-

चिंता वर्तते इति वाच्यम्, एवमेव भूम्यवलोकनेन मूलचिंता, समावलोकने साधारणदृष्टितो धातुचिन्ता वक्तव्या । अस्मिन् प्रश्ने दैवज्ञेन प्रष्टुरागमनकाले सावधानतया भवितव्यमिति ॥ ४ ॥

भाषार्थ-अन्य प्रकार कहते हैं-यदि प्रश्नकर्ता आगमनकालमें आकाशकी तरफ देखे तो जीवचिन्ता जाननी । यदि ( भूमि ) पृथिवीकी ओर नीचे देखे तो मूलचिन्ता कहै । यदि समदृष्टि [ न ऊर्ध्व न नीचे साधारणदृष्टि ] होय तो धातुचिन्ता कहनी । यह केवल दृष्टिसेही धातुमूलजीवप्रश्न जानना ॥ ४ ॥

**पूर्वस्यां धातुचिन्ता स्याज्जीवं दक्षिणतस्तथा । उत्तरस्यां वदेन्मूलं पश्चिमे मिश्रितं फलम् ॥ ५ ॥ शिरः स्पर्शे तु जीवः स्यात्पादस्पर्शे तु मूलकम् । धातुश्च मध्यमस्पर्शे शारदावचनं यथा ॥ ६ ॥ बाहुवक्त्रशिरःस्पर्शे जीवचिंता शुभावहा । हृदयोदरसंस्पर्शे धातुचिंता तु मध्यमा ॥ ७ ॥ गुदवृषणसंस्पर्शे चाधमं मूलचिंतनम् । जानुजंघापदस्पर्शे जीवचिन्तां विनिर्दिशेत् ॥ ८ ॥**

विष्णुपदी-अथ पूर्वादिदिग्विभागतः फलमाह-पूर्वस्यामिति । आगमनकाले पृच्छकस्य यदि पूर्वदिग्भागे मुखं तदा धातुचिन्ता वदेद्यदि दक्षिणे मुखं तदा जीवचिन्ता वाच्या, उत्तरस्यां दिशि मुखे मूलं वाच्यं, पश्चिमे मुखे धातुजीवात्मकं मिश्रितफलं ज्ञेयम् ॥ ५ ॥ अथाङ्गस्पर्शादितो धात्वादिकमाह-प्रश्नकाले प्रश्नकर्ता यदि शीर्षं स्पृशति तदा जीवं, पादं स्पृशति चेत्तदा मूलं मध्यममिति मध्यांगस्पर्शे धातुं ब्रूयात् ॥ ६ ॥ विस्तरतस्तमेवानुवदति-बाहुवक्त्रेति । बाहू द्वौ वक्त्रस्फिङ्मांसमेदःशिरसः सम्यक्स्पर्शे शुभसंजननीं जीवचिन्तां निर्दिशेत् । हृदयं प्रसिद्धम्, उदरं जठरं तत्स्पर्शे मध्यमधातुधनादिकस्य चिंता वाच्या । गुदं पायुर्मलनिःसरणरंध्रमिति, वृषणौ मुष्कौ अनयोः स्पर्शे अधमं निष्कृष्टं मूलचिंतनं ज्ञेयम् । जानुजंघापदस्पर्शे जीवचिंता वाच्या । अथ कथं पादस्पर्शे तु मूलकमित्युक्त्वा पुनः पदस्पर्शे जीवचिंतां विनिर्दिशेदित्युक्तं स्वमुखेनैव दोषापत्तिविरुद्धार्थतेति । अत्रोच्यते-यद्यपि पदशब्दस्य मिथो विरुद्धार्थत्वादनर्थप्रतीतेरवश्यम्भावः सम्पद्यते तथापि निर्मातुर्हृद्गतार्थबोधनेऽस्मादृशानां का गतिर्वा निरङ्कुशाः स्वतन्त्रा वा कवय इति नानार्थसम्भावना । अर्थसंगतिस्त्वत्र स्पष्टैव । यथा पादस्पर्शे

तु मूलकमित्यत्र केवलपादशब्दप्रयोगात् केवलपादस्पर्शे एवं मूलं ज्ञेयम् । जानुजंघापदस्पर्शे जीवचिंतां विनिर्दिशेदित्यत्र जंघापदयोः सम्बन्धार्थे तात्पर्यम् । यदि जंघापदमेकदैव स्पृशति तदा जीवं वाच्यमिति सुधीभिर्ज्ञेयम् ॥ ७ ॥ ८ ॥

**भाषार्थ**-अथ दिग्द्वारा धातु मूल जीव कहते हैं-यदि प्रश्नकर्ताका आगमनकालमें पूर्वकी ओर मुख होय तो धातुकी चिंता कहनी, यदि दक्षिणकी तरफ मुख होवे तो जीवचिंता जाननी, यदि उत्तर दिशाकी तरफ मुख होय तो मूलचिंता कहै, यदि पश्चिममें मुख होय तो मिश्रित धातु जीवादि कहै ॥ ५ ॥ अब अंगस्पर्शसे धातु मूल जीव कहते हैं-यदि शिर स्पर्श करे तो जीव, पादस्पर्श करे तो मूल, ( मध्यस्थान ) कटि स्पर्श करे तो धातु क्रमसे जानना ॥ ६ ॥ बाहु वक्र शिर स्पर्शसे शुभ जीवचिन्ता, हृदय उदर स्पर्शसे मध्यम धातुचिन्ता कहै, गुदा वृषण ( मुष्क ) स्पर्शसे अधम मूलचिन्ता कहै और जानु जंघा पद स्पर्शसे जीवचिन्ता कहै । यहां पुनः पदोपादानसे जंघापदका संबंधार्थमें तात्पर्य है ॥ ७ ॥ ८ ॥

**न दृश्यतेऽष्टद्वितये च कार्यं रसैः समुद्रैर्निजकार्यसिद्धिः । सप्तत्रयोऽङ्काः कथयंति धैर्यं नवैकपंचत्वरितं ददन्ते ॥ ९ ॥ इति श्रीप्रश्नचण्डेश्वरे कार्यप्रश्नाध्यायस्तृतीयः ॥ ३ ॥**

**विष्णुपदी**-अथाङ्कोपरि अंगुलीं स्थापयित्वा तस्मात्कार्यसिद्धिमाह-प्रथमतो नवाङ्कान्कोष्ठे स्थापयित्वा तदुपरि अंगुलीं निवेश्य फलमाह-यदि अष्टसंख्यात्मकेऽङ्के वा द्वितीयेऽङ्केऽङ्गुली पतति तदा कार्यं न दृश्यते न स्यादित्यर्थः । यदि षष्ठे चतुर्थेऽङ्के कठिनी पतति तदा निजस्य स्वस्य कार्यस्य सिद्धिर्वाच्या । सप्तमे तृतीयेऽङ्केऽङ्गुलीपतनाद्धैर्य्येण कार्यं भवति । नवमे प्रथमे पंचमेऽङ्केऽङ्गुलीपतनाच्छीघ्रं कार्यं भविष्यतीति शेषः । अत्रोपजातिनामच्छन्दः ॥ ९ ॥

| | | |
|---|---|---|
| ३ | २ | १ |
| ४ | ५ | ६ |
| ९ | ८ | ७ |

इति श्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शोरि ) अन्वयालंकृतिदैवज्ञदुनिचन्द्रात्मजपं० विष्णुदत्तवैदिककृतप्रश्नचण्डेश्वरटीकायां कार्यप्रश्नाध्यायस्तृतीयः ॥ ३ ॥

**भाषार्थ**-अथ अंकपर अंगुली रखवाकर फल कहते हैं-यदि अष्टम और दूसरे अंकपर अंगुली रखे तो कार्य सिद्ध नहीं होगा । यदि षष्ठ चतुर्थ अंकपर अंगुली

धरे तो कार्य सिद्धि होता है। यदि सात तीन अंकपर हाथ रखे तो धैर्य्य और विलंबसे कार्य तोता है। यदि प्रथम पंचम नवम अंकपर अंगुली रखे तो शीघ्र कार्य होता है॥९॥

इति श्रीपूर्व० दै० दुनिचन्द्रात्मज ( शोरि ) पं० विष्णुदत्तवैदिक-
कृते प्रश्नचंडेश्वरभाषाभावार्थे कार्यप्रश्नाध्यायस्तृतीयः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ४.

### नष्टवस्तुप्रश्नः ।

लग्नत्रिकर्मात्मजमित्रधर्मलाभार्थगैः सौम्यखगैर्बलान्वितैः ।
केन्द्रत्रिकोणाष्टमलाभवर्ज्यैः पापैर्भवेन्नष्टधनस्य लाभः ॥ १ ॥

विष्णुपदी–अथ नष्टधनस्य लाभमाह–लग्नत्रिकर्मात्मज इति । बलान्वितैर्बलयुक्तैः सौम्यैः शुभैः खगैः खेचरैर्बृहस्पतिदैत्याचार्यपूर्णचन्द्रबुधैरित्यर्थः । लग्ने, तृतीये, कर्मणि दशमे, आत्मजे तनये, मित्रगृहे, धर्मे नवमे, लाभे एकादशे, अर्थे धने द्वितीये एषु स्थानेषु स्थितैः संस्थितैः पापैः क्रूरैः क्षीणचंद्रसूर्यभौमशनिबुधैः केन्द्रं लग्नचतुर्थसप्तमदशमस्थानम्, त्रिकोणं नवमपंचमम्, अष्टमं, लाभमेकादशं स्थानमेतद्रहितैर्नष्टस्य प्रनष्टस्य, मुषितस्य चौरैरपहृतस्य धनस्य धनशब्देन सर्वाभिलषितवस्तु सूच्यते लाभो लब्धिर्भवेत् । ये ग्रहाः स्वराशौ स्थिता वा मित्रगृहे स्थिता वा स्वोच्चे स्वनवांशे स्थितास्ते बलिनो ज्ञेयाः । उक्तं च बृहज्जातके –"स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलं स्वगृहोपगतैश्च । दिक्षु बुधांगिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च ॥" भावार्थस्तु यो ग्रहो बली लग्ने स्थितो लग्नं वा पूर्णदृष्ट्या पश्यति शुभः सन् तद्दिशो धनप्राप्तिःस्यात्स्थिरे लग्ने स्वस्थानात्तद्दिग्भागे। चरे दूरात् । द्विस्वभावे आराद्धनलाभ इति सिद्धम् । यथा सुराचार्यः शुभग्रहाणां मध्ये बली भूत्वा लग्ने स्थितो वा पश्यति लग्नं तदा उत्तरस्वामिकत्वात्तस्य उत्तरतो धनप्राप्तिः । सर्वग्रहेष्वप्येवम् । अत्रोपजातिच्छन्दस्तल्लक्षणं पूर्वमुक्तम् ॥ १ ॥

भाषार्थ–लग्नमें तीसरे दशवें पांचवें मित्रगृहमें नवमस्थानमें एकादश स्थानमें दूसरे सौम्य शुभग्रह बलयुक्त होवें और पापी ग्रह केन्द्र १ । ४ । ७।१० त्रिकोण ९ । ५ अष्टम एकादशस्थानसे रहित होंय तो नष्ट धनका लाभ होता है ॥ १ ॥

## अथ मित्रसमशत्रुचक्रम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| चं. मं. बृ. | सू. बु. | बृ. चं. सूर्य | सूर्य शुक्र | मं. सू. चंद्र | बुध शनि | शुक्र बुध | मित्राणि |
| बुध | मं. बृ. शु. श. | शुक्र शनि | मं. बृ. शनि | शनि | मंग. बृह. | बृह | समाः |
| शनि शुक्र | | बुध | चंद्र. | बुध शुक्र | सूर्य चंद्र | सूर्य चं मं. | शत्रवः |

## अथ ग्रहाणामुच्चनीचचक्रम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| मेष १० | वृषभ ३ | मकर २८ | कन्या १५ | कर्क ५ | मीन २७ | तुल २० | राश्यं-शोच्चग्र. |
| तुल १० | वृ. ३ | कर्क २८ | मीन १५ | मकर ५ | कन्या २७ | मेष २० | रा. शा. प. ग्र. |

## अथ ग्रहाणां स्वत्रिकोणचक्रम् ।

| सू. | च. | मं. | बु. | बृ. | शु. | श. | रव्यादयः |
|---|---|---|---|---|---|---|---|
| सि. | वृ. | मे. | क. | ध. | तु. | कुं. | त्रिकोणभवनानि |

## अथ नवमांशचक्रम् ।

| अंक | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३।२० | मं | श | शु | चं | मं | श | शु | चं | मं | श | शु | चं |
| ६।४० | शु | श | मं | सू | शु | श | मं | सू | शु | श | मं | सू |
| १०।०० | बु | बृ | बृ | बु | बु | बृ | बृ | बु | बु | बृ | बृ | बु |
| १३।२० | चं | मं | श | शु | चं | मं | श | शु | चं | म | श | शु |
| १६।४० | सू | शु | श | मं | सू | शु | श | मं | सू | शु | श | मं |
| २०।०० | बु | बु | बृ | बृ | बु | बु | बृ | बृ | बु | बु | बृ | बृ |
| २३।२० | शु | चं | मं | श | शु | चं | मं | श | शु | चं | मं | श |
| २६।४० | मं | सू | शु | श | मं | सू | शु | श | म | सू | शु | श |
| ३०।०० | बृ | बु | बु | बृ | बृ | बु | बु | बृ | बृ | बु | बु | बृ |

केन्द्रत्रिकोणाष्टमवित्तसंस्थैः पापग्रहैश्चाशुभवीक्षितैश्च । सौम्यैरमिश्रैः खलु वित्तनष्टिर्नाशो भवेदन्यधनस्य चापि ॥ २ ॥

विष्णुपदी-अधुना नष्टधनस्यालाभमाह-केन्द्रत्रिकोणेति । केंद्र १ । ४ । ७ । १० त्रिकोण ९ । ५ अष्टम ८ वित्त २ स्थितैः पापैश्चाशुभवीक्षितैः सौम्यैः शुभैरमिश्रैः । खल्विति निश्चयार्थेऽव्ययम् । "खल्विति खलुकृत्वा खलुकृतमथापि पदपूर्णे " इति निरुक्तम् । निश्चयेन चौरैर्मुषितस्य नष्टस्य धनस्य नाशो भवेत् न लब्धिरिति भावः । अन्यधनस्य विद्यमानस्यापि नाशो भविष्यतीति । चौरप्राप्त्यर्थं धनव्ययस्य वैयर्थ्यमित्यर्थः । अत्र नष्टिपदं छन्दोभङ्ग्याच्छ्रुतिकट्वपि निबद्धम् २

भाषार्थ-केन्द्र १ । ४ । ७ । १० त्रिकोण ९ । ५ वित्त २ दूसरे इन स्थानोंमें पापी ग्रह स्थित होवें उनको पापी ग्रह पूर्ण दृष्टिसे देखें और शुभग्रह मिश्रित न हों तो नष्ट धनका लाभ नहीं होता और भी साथ धनव्यय ( नाश ) होता है ॥२॥

यस्मिन्राशौ भवेच्चन्द्रस्तद्राशेरधिपेन चेत् । दृश्यते चन्द्रमाः प्रश्ने तदा नष्टं च लभ्यते ॥ ३ ॥ चंद्रो यदि भवेल्लग्ने तदा पूर्वगतं भवेत् । दशमस्थानगे चंद्रे तदा नष्टं च दक्षिणे ॥ ४ ॥ सप्तमे च भवेच्चन्द्रस्तदा वित्तं च पश्चिमे । चतुर्थे च भवेच्चंद्रस्तदा सौम्या दिगुच्यते॥५॥

विष्णुपदी-अथ चन्द्रान्नष्टधनलाभमाह-यस्मिन्निति । प्रश्नलग्नाद्यस्मिन्राशौ चन्द्रमाः स्यात् तद्राशिस्वामिना यदि चन्द्रमा दृश्यते पूर्णदृष्ट्या तदीश्वरश्चन्द्रमसं पश्येदित्यर्थः । तदा तस्मिन्काले नष्टधनस्य लाभो भविष्यतीति वक्तव्यम् ॥ ३ ॥ अथ चन्द्रसकाशादेव दिग्ज्ञानमाह-चन्द्रो यदीति । प्रश्नलग्नसमये यदि चन्द्रमाः प्रश्नलग्नगतः स्यात्तदा नष्टं धनं पूर्वस्यां दिशि चौरादिना नीतं स्यात् । प्रश्नलग्नाद्दशमस्थिते रोहिणीरमणे तदा धनादिकं नष्टं दक्षिणस्यां दिशि विज्ञातव्यम् । एवमेव प्रश्नलग्नात्सप्तमे चन्द्रे वित्तं पश्चिमाश्रितं स्यात् । चतुर्थे चन्द्रे सौम्या दिक् उत्तरस्यां दिशि गतं धनं ज्ञेयमिति ॥ ४-५ ॥

भाषार्थ-जिस राशिमें चन्द्रमा होय उस राशिका स्वामी चन्द्रमाको पूर्ण दृष्टिसे देखे तो नष्ट धनादि वस्तु प्राप्त हो जाती है ॥ ३ ॥ चन्द्रमासे दिशा निरूपण करते हैं-यदि चन्द्रमा लग्नगत होय तो पूर्वकी दिशामें, यदि दशम स्थानस्थित चन्द्रमा होय तो दक्षिणमें, यदि सप्तमस्थानमें प्रश्नलग्नसे चन्द्रमा होय तो पश्चिममें,

यदि चतुर्थ स्थानमें प्रश्नलग्नसे चन्द्रमा होय तो सौम्यदिक् अर्थात् उत्तरदिशामें नष्ट धनादि गया होता है और चरराशि होय तो बहुत दूर; स्थिर होय तो गृहसे समीप उस तरफ,द्विस्वभाव हो तो दूर समीप उस दिशामें धन जानना ॥ ४-५ ॥

लग्नाच्चद्रो भवेद्यत्र तत्र चौरगृहं भवेत् । ब्राह्मणः क्षत्रियो वैश्यःशूद्रो वा स्वजनोऽङ्गना ॥ ६ ॥ भ्राता पुत्रश्च स्नुषा स्यान्मूषिकोऽथ भृत्यश्च भूः । मेषादिषु क्रमाच्चौरं नामेशाद्राशितुल्यकम् ॥ ७ ॥

विष्णुपदी-अथ चौरस्वरूपगृहादिकमाह-लग्नाच्चन्द्र इति । यत्र यस्मिन्नाशौ प्रश्नलग्नाचन्द्रः सुधांशुर्भवेत्तत्रैव चौरगृहं भवेत् । उदाहरणं यथा-प्रश्नलग्नं मेषराशिस्तस्माचतुर्थराशौ कर्के चन्द्रमाः स्थितस्तदा उत्तरस्यां दिशि स्वस्थानाच्चौरगृहं वदेत् । एवं मेषे चन्द्रे पूर्वस्यां दिशि, वृषे, दक्षिणस्यां, मिथुने पश्चिमायां, कर्के उत्तरस्यां, सिंहे पूर्वस्यां, कन्यास्थे दक्षिणस्यां, तुलास्थे पश्चिमायां, वृश्चिकस्थे उत्तरस्यां धनुःस्थे पूर्वस्यां मकरस्थे दक्षिणस्यां, कुम्भस्थे पश्चिमायां, मीनस्थे चंद्रे उत्तरस्यां दिशि चौरगृहं वाच्यम् । अथ मेषादिते ब्राह्मणादयो ज्ञेयाः । यथा मेषलग्ने ब्राह्मणश्चौरो, वृषे क्षत्रियः, मिथुने वैश्यः, कर्के शूद्रः, सिंहे स्वजनो बांधव इति । कन्याप्रश्नलग्ने स्त्री, तुलालग्ने भ्राता, वृश्चिके पुत्रो, धनुषि भृत्यो, मकरे स्नुषा पुत्रपत्नीत्यर्थः । कुम्भे मूषिको, मीने पृथिवी क्रमाद्बोध्यम् । इदं सर्वं मेषादिलग्नेषु क्रमतश्चौरस्य राशितुल्यकं रूपं राश्यंतर्गताक्षरं तन्नाम सुधीभिर्ज्ञेयम् । राशीनां स्वरूपं यथा बृहज्जातके-" रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डुश्चित्रः कृष्णः कनकसदृशः पिंगलः कर्बुरश्च । बभ्रुः स्वच्छः प्रथमभवनाद्येषु वर्णाः " इति । राशीशवद्रूपं चौरस्य ज्ञेयं वा राशिवत् । यथा-सिंहराशिः प्रश्नलग्नस्य तत्स्वामी सूर्यस्तद्रूपं-" मधुपिंगलदृक् चतुरस्रतनुः पित्तप्रकृतिः सवितात्पकचः " इत्यादि पूर्वमुक्तं राशिस्वरूपं ज्ञेयमिति ॥ ६ ॥ ७ ॥

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी | रा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रक्त | श्वेत | शुकवत | पाटल | धूम्रपाण्डु | चित्र | कृष्ण | कनक | पिंगल | कर्बुर, | बभ्रु | स्वच्छ. | वर्ण. |

भाषार्थ-लग्नसे चन्द्रमा जिस राशिमें होय वह जिस दिशाका स्वामी होय उस दिशामें चौरका घर कहना । जैसे-प्रश्नलग्नसे चन्द्रमा सिंहमें है तो सिंहलग्न स्वामी

पूर्वका है पूर्वमें चौरगृह कहा जावेगा । अब राशिक्रमसे चौरज्ञान लिखते हैं-यदि मेषलग्न प्रश्नकालमें होय तो ब्राह्मण चोर होता है, यदि वृष होय तो क्षत्रिय चौर जानिये, यदि मिथुन होय तो वैश्य. कर्क होय तो शूद्र, सिंह होय तो अपनाही बंधु, कन्या होय तो स्त्री, तुला होय तो भ्राता; वृश्चिक होय तो पुत्र, धन लग्न होय तो ( भृत्य ) चाकर, मकरलग्न होय तो ( स्नुषा ) पुत्रकी स्त्री, कुंभ होय तो मूषिक ( मूसा ), मीनलग्नमें पृथिवी क्रमसे जाननी, और नाम राशितुल्य जानना ॥ ६ ॥ ७ ॥

**अन्धमन्दाक्षसंमध्यलोचनं च सुलोचनम् । गणयेद्रोहिणींपूर्वं सप्तवारमनुक्रमात् ॥ ८ ॥ अंधे च लभते शीघ्रं काणे चैव दिनत्रये । चिपिटे मासमेकं स्याद्दिव्यदृष्टौ न लभ्यते ॥ ९ ॥**

अथ ग्रहाणामन्धमन्दादिलक्षणज्ञानार्थं कोष्ठकम् ।

| | | | |
|---|---|---|---|
| रोहिणी ४ | मृगशिर ५ | आर्द्रा ६ | पुनर्वसु ७ |
| पुष्य ८ | आश्लेषा ९ | मघा १० | पूर्वा फा० ११ |
| उत्तरफा० १२ | हस्त १३ | चित्रा १४ | स्वाति १५ |
| विशाखा १६ | अनुराधा १७ | ज्येष्ठा १८ | मूल १९ |
| पूर्वाषाढा २० | उ० षाढा २१ | अभिजित् २२ | श्रवण २३ |
| धनिष्ठा २४ | शत० २५ | पूर्वाभा २६ | उत्तर भा० २७ |
| रेवती २८ | अश्विनी १ | भरणी २ | कृत्तिका ३ |
| अन्ध लोचन | मद (कोण) नेत्र | मध्यनेत्र | सुलोचन |
| पूर्व | दक्षिण | पश्चिम | उत्तर |
| शीघ्र लाभ | तीन दिनके बाद कष्टसे लाभ | श्रवणमात्र मासके बाद | नष्टवस्तु नहीं मिलती |

विष्णुपदी—अथान्धादिनक्षत्राणां संज्ञापूर्वकलाभालाभावाह—अन्धमन्देति । रोहणीनक्षत्रं पूर्वं विधाय अनुक्रमाद्यथा रोहिणी प्रथमकोष्ठे, मृगशिरः द्वितीयकोष्ठे, आर्द्रा तृतीयकोष्ठे एवमेव नक्षत्राणां सप्तावृत्तयः कर्तव्याः । तदा प्रथमकोष्ठगतानामन्धसंज्ञा, द्वितीयकोष्ठस्थानां मन्दाक्षसंज्ञा, तृतीयकोष्ठप्राप्तानां मध्यलोचन ( चिपिट ) संज्ञा, चतुर्थकोष्ठस्थानां सुलोचनसंज्ञा ज्ञातव्या । तत्फल तु अन्धसंज्ञके नक्षत्रे हृतवस्तु शीघ्रं लभ्यते, मंदाक्ष ( काण ) नक्षत्रे दिनतृतीये, चिपिटे मध्यमनेत्रे एकमासेन नष्टवस्तु लभ्यते श्रवणमात्रमेके आचार्याः सुलोचनसंज्ञके नक्षत्रे न कदापि, कृतेऽपि यत्ने न लभ्यत इत्यर्थः ॥ ८ ॥ ९ ॥

भाषार्थ—यद्यपि उत्तराभाद्रपदका अंत्यचरण श्रवणका आदिचरणकी अभिजित् संज्ञा है तथापि यहां भिन्न लेनेसे २८ नक्षत्र होते हैं और प्रतिकोष्ठ सात २ नक्षत्र क्रमसे आ जाते हैं ॥ ८ ॥ ९ ॥

वस्त्वक्षरगुणयोगस्त्रियुतः पञ्चहृतस्तथा । एकेन स्वगृहे ज्ञेयं द्वितीयेन बहिस्तथा ॥ १० ॥ तृतीये शयनागारे चतुर्थे स्थानसन्निधौ । पञ्चमे च विनोदेन हृतस्तेनैव बुध्यताम् ॥ ११ ॥

विष्णुपदी—अधुनाङ्कयोगतो धनस्थानं निर्दिशति—वस्त्वक्षर इति । यत् वस्तु हृतं तदक्षराणां गुणयोगं कृत्वा त्रीनङ्कानपरान् तस्मिन्संयोज्य पुनः पंचभिर्भागो दातव्यः । एकाङ्के लब्धे नष्टं धनं स्वगृहे ज्ञेयं, तृतीयेऽङ्के शयनगृहे यत्र रात्रौ शयनं क्रियते, चतुर्थे स्वस्थानात्समीपे वाच्यम् । पञ्चमाङ्कलब्धे विनोदेन हास्येन तेनैव संगृहीतमिति सुधीभिर्बुध्यताम् । नष्टवस्तुस्थानज्ञानायान्यदपि प्रकारान्तरं कथ्यते यथा—"तिथिं वारं च नक्षत्रं प्रहरेण समन्वितम् । दिक्संख्यया हतं चैव सप्तभिर्विभजेत्पुनः ॥ एकेन भूतले द्रव्यं द्वयं चेद्भाण्डसंस्थितम् । त्रिभिस्तु जलमध्यस्थमंतरिक्षे चतुर्थके ॥ तुषस्थं पञ्चमे तु स्यात्षष्ठे गोमयमध्यगम् । सप्तमे भस्ममध्यस्थमित्येतत्प्रश्नलक्षणम् ॥" अन्तरिक्षे कोऽर्थश्चन्द्रशालाप्रतोलिकायां, तरुशाखायां वा ज्ञेयमिति । अन्यथाऽऽधारं विनाऽऽधेयस्यासंभवात् ॥ १० ॥ ११ ॥

भाषार्थ—जो नष्ट वस्तु उसके अक्षर गुण योग कर तीन अंकऔ मिलाय पांचसे भाग देय । यदि एक लब्ध आवे तो अपने घरमेंही नष्ट धन होता है । यदि दो अंक शेष होय तो गृहसे बाहर धन चला गया समझे । यदि तीन अंक मिलें तो शयनस्थानमें धन होय । यदि चार अंक मिलें तो अपने स्थानसे समीप अन्य स्थानमें धन होता है । यदि

पांच अंक मिलें तो अपने आपही हास्य कर धन चुराया होता है । अन्य कोई नहीं । अन्य प्राप्ति उपाय लिखते हैं—प्रश्नकालकी तिथि और वार नक्षत्र और प्रहर यह एकत्र कर दश १० अंकसे गुण देवे फिर सातसे भाग दे । यदि एक बचे तो पृथिवीमें धन गडा हुआ होता है । यदि दो अंक मिलें तो भाण्डमें धन होता है । तीन मिलें तो जलके बीचमें अर्थात् किसी कूएंमें वा तालावमें वा नदी नालेमें धन होता है । यदि चार अंक मिलें तो आकाशमें अर्थात् किसी ऊंचे मकान ( स्थान ) चवारे छटारी वा किसी वृक्षके ऊपर धन होता है । यदि पांच अंक लब्ध होंय तो तुषस्थ अर्थात् किसी तृणोंके स्थान जैसे तूडीमें वा घासमें वा कमाद जुवार कनकआदि क्षेत्रमें धन समझना चाहिये । यदि छः (षट्) अंक मिले तो गोमय गोबर गुहूरे वा रूडी इत्यादि स्थानमें नष्ट भयाधन देखना। यदि सात अंक मिलें तो ( भस्म ) राख वा आँवा जिसमें ईंटें पकाई जायँ अथवा अन्य निकृष्टस्थान ऐसा जानो । यह अपनी बुद्धिसे श्लोकका आशय ले समझना चाहिये ॥ १० ॥ ११ ॥

चरे दूरं विजानीयात्स्थिरे गृहगतं भवेत् । द्विस्वभावे वदेद्बाह्यं लग्नात् त्रिविधमादिशेत् ॥ १२ ॥ अग्निभान्मध्यतो लेख्यं पूर्वादिषु त्रिकं त्रिकम् । यस्यां च तस्य नक्षत्रं तस्यां नष्टधनं भवेत् ॥ १३ ॥ चंद्रभादग्निपर्य्यन्तं गणनीयं भमण्डलम् । त्रिकं त्रिकं मध्यमं स्यादग्निभे मार्ग उच्यते ॥ १४ ॥

विष्णुपदी—अथ लग्नादेव दूरादिज्ञानमाह— चरे दूरमिति । प्रश्ने दूरं धनादिकं गतं विजानीयात् । स्थिरलग्ने गृहगतं भवेत् । द्विस्वभावे द्व्यंगोदये गृहाद्बाह्यनगरान्तर्गतं सीमान्तर्गतं वा जानीयात् इति ॥ १२ ॥ नक्षत्राद्धनज्ञानमाह—द्वाभ्याम् । अग्निभं कृत्तिकामारभ्य मध्यपूर्वादिक्षु त्रिकं त्रिकं नक्षत्राणां यंत्रे लेखनीयं यस्यां दिशि तस्य नक्षत्रं तस्यामेव दिशि नष्टधनादिकं वदेत् । अथवा चंद्रभात् कृत्तिकापर्यन्तं भ ( नक्षत्रं ) मण्डलं गणनीयं त्रिकं त्रिकं मध्यमं मध्यं स्यादग्निभे कृत्तिकायां मार्ग उच्यते ॥ १३—१४ ॥

भाषार्थ—यदि प्रश्नकालमें पूर्वोक्त चरराशि होय तो नष्ट धन दूर देशमें जाने। यदि प्रश्नका स्थिर लग्न होय तो गृहमें नष्ट धन होता है । यदि द्विस्वभावराशि प्रश्नगत होय तो गृहसे बाहर दूर समीप धन होता है ॥ १२ ॥ नक्षत्रसे धनज्ञान

लिखते हैं-कृत्तिकासे तीन २ नक्षत्र मध्यमें और पूर्वादिदिशामें रखे, जिस दिशामें प्रश्नकालका नक्षत्र होवे उस दिशामें नष्ट धन प्राप्त होता है यह कहे। अथवा चन्द्रनक्षत्रसे जिस नक्षत्रमें चन्द्रमा होय उस नक्षत्रसे कृत्तिकापर्यंत नक्षत्रमण्डल गणना करे। तीन २ मध्यादिमें दे कृत्तिकासे मार्ग कहे ॥ १३-१४ ॥

अवस्थामाह।

**कुमारिकां बालशशी बुधश्च वृद्धां शनिः सूर्यगुरू प्रसूताम्। सवि-स्मयां भौमसितौ विधत्त एवं वयः स्यात्पुरुषेषु चैवम् ॥ १५ ॥**

**इति श्रीप्रश्नचण्डेश्वरे नष्टवस्तुविचाराध्यायश्चतुर्थः ॥ ४ ॥**

विष्णुपदी-अथ स्त्रीपुरुषयोर्वयोज्ञानमाह-ब्राह्मणःक्षत्रियो वैश्य इत्यादिना। स्त्रीपुरुषं विज्ञाय पुनर्दार्ढ्यार्थम् अवस्थालक्षणमाह ग्रंथ कृत्-कुमारिकामिति। बालश्चासौ शशी कुमुदिनीबंधुः, बुधो रौहिणयः कुमारिकां कन्यां कथयतः। "कन्या कुमारी गौरी" इत्यमरः। शनिः शनैश्वरो वृद्धां पलिक्नीं कथयति। 'वृद्धा पलिक्नीं प्राज्ञी तु' इत्यमरः। सूर्यश्च गुरुश्च सूर्यगुरू। "चार्थे द्वंद्वः" वियन्मणिसुराचार्यौ प्रसूतामपत्यवनीं कुरुतः। भौमो मंगलः, सितः शुक्रः तौ भौमसितौ सविस्मयां विस्मयेन सहितां विस्मययुक्तहृदयां विधत्तः। विस्मयशीलश्चौर्यो गृहीतव्य इत्यपि मन्वादिभिरुक्तम्। अन्येऽपि शंकया ग्राह्या इत्यादि। एवमुक्तप्रकारेण पुरुषेष्वपि वयः प्रमाणं ज्ञेयम। यथा शशिबुधौ कुमारं, शनैश्वरो वृद्धं, सूर्यबृहस्पती पुत्रवंतं, कुजशुक्रौ विस्मितचित्तं पुरुषं कथयतः। अथ पुरुषलक्षणम्-" पुरुषः पुरिशादः पुरिशयः पूरयतेर्वा" इति निरुक्तम् ॥ १५ ॥

इति कर्पूरस्थलीयगौतमगोत्र ( शोरि ) अन्वयालंकृतिदैवज्ञदुनिचन्द्रात्मजपण्डितविष्णुदत्तवैदिककृतप्रश्नचंडेश्वरटीकायां नष्टवस्तुविचाराध्यायश्चतुर्थः ॥ ४ ॥

भाषार्थ-अवस्थाज्ञान कहते हैं-कुमारी कन्याको ( शशी ) चन्द्रमा बुध कहते हैं। वृद्धा स्त्रीको शनि, सूर्य बृहस्पति प्रसूता स्त्रीको, मंगल शुक्र विस्मययुक्त स्त्रीको कहते हैं। इसी प्रकार पुरुषोंकी अवस्था जाने। जैसे बालकको चन्द्रमा बुध, वृद्धको शनि, संतानयुक्त पुरुषको सूर्य बृहस्पति, मंगल शुक्र चिंतायुक्त पुरुषको कहते हैं ॥ १५ ॥

इति कर्पूरस्थलनिवासि दैवज्ञदुनिचन्द्रात्मज ( शोरि ) पंडितविष्णुदत्तवैदिककृते प्रश्नचण्डेश्वरभाषाभावार्थे नष्टवस्तुविचाराध्यायश्चतुर्थः ॥ ४ ॥

# अथ पंचमोऽध्यायः ५.

अथ मुष्टिगतप्रश्नमाह ।

चन्द्रे शुक्रे भवेद्रौप्यं बुधे स्वर्णमुदाहृतम् । गुरौ रत्नयुतं हेम सूर्ये मौक्तिकमुच्यते । कुजे रत्नं शनौ लोहमस्थिजातं तु शेषके ॥ १ ॥

विष्णुपदी—अथ किं मम मुष्टिकायां वर्तत इति प्रश्ने । सर्वेभ्योऽधिकबलवति लग्नस्थिते चन्द्रे अथवा शुक्रे मुष्टिकायां रौप्यं भवेदेवं बुधे रोहिणीतनये स्वर्णं ज्ञेयम् । गुरौ सुराचार्ये रत्नेन मणिना युक्तं संयुतं सुवर्णं ज्ञेयम् । सूर्येऽम्बरमणौ मौक्तिकं मुक्ताफलम् । कुजे भौमे ( धरणिनंदने ) केवलं रत्नं ज्ञेयम् । शनौशनैश्चरे ( छायापुत्रे ) लोहमायसम् । राहुकेतुभ्याम् अस्थिजातं ज्ञेयम् ॥ १ ॥

भाषार्थ—मुष्टिगतवस्तुज्ञान लिखते हैं—कि संपूर्णग्रहोंसे बली चन्द्रमा लग्नगत होय अथवा शुक्र लग्नमें होय तो रौप्य ( रजत ) कहैं । यदि बुध होय तो सुवर्ण कह देवें । यदि बृहस्पति होय तो रत्नसे खचित सुवर्ण अंगुलीयक आदि कहैं । यदि सूर्य होय तो मोती कहैं । मंगल होय तो रत्न ( लाल ) कहैं । यदि शनैश्चर बली होय लग्नगत होवे तो लोह कहैं । राहु केतु होवें तो अस्थि आदि शब्दसे पाषाण लोष्ठ काष्ट आदि कहैं ॥ १ ॥

मेषेऽरुणो वृषे शुक्लो हरितं मिथुने मतम् । पाटलं कर्कटे राशौ धूम्रवर्णश्च केसरी ॥ २ ॥ विचित्रवर्णं कन्यायां कृष्णवर्णं तुलाधरे । अलौ पिशंगवर्णं च कुम्भके बभ्रुवर्णकम् । मीने तु मलिनं कान्तं विज्ञेयं राशिवर्णतः ॥ ३ ॥

विष्णुपदी—अथ प्रश्नकालीनराशितो मुष्टिगतवस्तूनां स्वरूपमाह—मेषेऽरुण इति । मेषराशौ प्रश्नलग्ने अरुणमीषद्रक्तं, वृषे शुक्लं गौरं, मिथुने हरितं शुकवर्णात्मकं, कर्कटे पाटलं । 'स्यात्कुलीरः कर्कटकः' 'श्वेतरक्तस्तु पाटलः' इत्यमरः । सिंहे धूम्रं । 'श्यावः स्यात्कपिशो धूम्रः' इत्यमरः । कन्यालग्ने चित्रं बहुवर्णात्मकम्, तुलाधरे कृष्णं वस्तु, अलौ वृश्चिके पिशंगवर्णं । 'पिशंगे कद्रुपिंगलौ' इत्यमरः । कुम्भराशौ बभ्रु पांडुवर्णः । मीनप्रश्नलग्ने मलिनं स्वच्छं वेति राशिवर्णतो वस्तुवर्णं सुधीभिर्ज्ञेयम् ॥ २ ॥ ३ ॥

भाषार्थ-अथ प्रश्नलग्नस्वरूपसे वस्तुस्वरूप लिखते हैं-यदि प्रश्नकालमें मेष लग्न होय तो वस्तु लाल, वृष होय तो शुक्ल, मिथुनमें हरित ( तोतेके रंगकी ), कर्कमें पाटल ( गुलाबी ), सिंह लग्न होय तो धूम्र जैसा वर्ण, कन्या लग्न होवे तो बहुत वर्ण, तुलालग्न प्रश्नका होय तो कृष्णवर्ण, वृश्चिक लग्न होवे तो पिशंग-वर्ण अर्थात् यवोंका रंग वा जटाका रंग होता है। धन होय तो पिंगल, मकरलग्न होय तो कुर्बुर, कुम्भ होय तो बभ्रु, मीनलग्न होय तो स्वच्छवर्ण मीनका जैसा रंग होता है ॥ २ ॥ ३ ॥

**गौरः शशी चंपकसन्निभश्च जीवोऽथ भानुश्च पिशंगवर्णौ ।**
**आपाटलाभश्च महीसुतः स्यान्नीलाभसौम्योऽपि च गौरवर्णः ॥ ४ ॥**
**भृगुः शनिर्वा कथितस्तथैव कृष्णश्च कर्बूरतनुर्द्विवर्णः ।**
**विज्ञायवर्णान्प्रवदेत्सुनिश्चितं स नोपहास्यं व्रजतीह लोके ॥ ५ ॥**

**इति श्रीप्रश्नचण्डेश्वरे मौष्टिकप्रश्नाध्यायः पञ्चमः ॥ ५ ॥**

विष्णुपदी-अथ सूर्यादिग्रहाणां वर्णं याथार्थ्यतो विज्ञाय मुष्टिगतवस्तुनो रूप माकृतिं ब्रूयादेवं कथने लोकानां मध्ये पूज्यत्वं याति । अन्यथाऽविचार्य्यैव शीघ्रक-थने हास्यं व्रजति, अत एव ग्रहाणां स्वरूपं विशेषतः प्रदर्श्यते येन ज्ञानमात्रेण सर्वं हस्तामलकवत्पश्याति । उक्तं च श्रीनीलकण्ठाचार्य्यैः । यथा-"सूर्यो नृपो ना चतुरस्रमध्ये दिनेन्द्रदिक्स्वर्णचतुष्पदोग्रः। सत्त्वं स्थिरस्तिक्तपशुक्षितिस्तु पित्तं जरन् पाटलमूलवन्यः ॥ १ वैश्यः शशी स्त्री जलभूस्तपस्वी गौरोऽपराह्णांबुगधातुसत्त्वम् । वायव्यदिक् श्लेष्मभुजंगरूपस्थूलो युवा क्षारशुभः सिताभः ॥ २ ॥ भौमस्तमः पित्त-युवोग्रवन्यो मध्याह्नधातुर्यमदिक्चतुष्पात् । नाराट् चतुष्कोणसुवर्णकारदग्धावनी-व्यंगकटुश्च रक्तः ॥ ३ ॥ ग्राम्यः शुभो नीलसुवर्णवृत्तः शिश्विष्टकोचः समधातु-जीवः । श्मशानयोषोत्तरदिक्प्रभातं शूद्रःखगःसर्वरसो रजोज्ञः ॥ ४ ॥ गुरुः प्रभाते नृशुभेशदिग्द्विजः पीतो द्विपाद्ग्राम्यसुवृत्तजीवः । वाणिज्यमाधुर्यसुरालयेशो वृद्धः सुरत्नः समधातुसत्त्वम्॥ ५ ॥ शुक्रः शुभः स्त्री जलगोऽपराह्णः श्वेतः कफी रूप्यर-जोऽम्लमूलम् । विप्रोऽग्निदिङ्मध्यवया रतीशी जलावनी स्निग्धरुचिर्द्विपाच्च ॥ ६॥ शनिर्विहङ्गोऽनिलवन्यसंध्याशूद्रोऽङ्गनाधातुसमः स्थिरश्च। क्रूरः प्रतीची तुवरोऽतिवृ-द्धोत्कटक्षितीड्दीर्घसुनीललोहम् ॥ ७ ॥ राहुस्वरूपं शनिवन्निषादजातिभुजंगोस्थि-

पनैर्ऋतीशः। केतुः शिखी तद्वदनेकरूपः खगस्वरूपात्फलमूह्यमित्थम् ॥ ८ ॥ खगस्वरूपात्पूर्वोक्तात्सर्वं लाभालाभचौरज्ञाननष्टवस्तुमुष्टिगतयात्रादीनां विद्वद्भिः फलं ज्ञेयम्। प्रस्तावतो मुष्टिगतप्रश्ने फलं प्रदर्श्यते—यथा सूर्ये बलिनि स्वर्णम्। चन्द्रे जलोत्पन्नं मौक्तिकशुक्तिकपर्दिकादिकमनुमानात् ज्ञेयमित्यादि। एवमेव सर्वप्रश्ने संभाव्यम्। ग्रहनिरूपितं दिक्पुरुषलक्षणं सर्वत्र योज्यम्। प्रस्तावप्राप्तं राशीनामपि स्वरूपमुच्यते उक्तञ्च तत्रैव—पुमांश्चरोऽग्निः सुदृढश्चतुष्पाद्रक्तोष्णपित्तोऽतिरवोऽद्रिरुग्रः। पीनो दिनं प्राग्विषमोदयोऽल्पसंगप्रजो रूक्षनृपः समोजः ॥१॥ वृषः स्थिरः स्त्री क्षितिशीतरूक्षो याम्येट् सुभूर्वायुनिशा चतुष्पात्। श्वेतोऽतिशब्दो विषमोदयं च मध्यप्रजासङ्गशुभोऽपि वैश्यः॥२॥ प्रत्यक्समीरः शुकभा द्विपान्ना द्वन्द्वं द्विमूर्तिर्विषमोदयोष्णः। मध्यप्रजासङ्गवनस्थशूद्रो दीर्घस्वनः स्निग्धदिनेट् तथोग्रः॥३॥बहुप्रजासंगपदः कुलीरश्चरोऽङ्गना पाटलहीनशब्दः। शुभः कफी स्निग्धजलाम्बुचारी समोदयो विप्रनिशोत्तरेशः ॥ ४ ॥ पुमान्स्थिरोऽग्निर्दिनपीतरूक्षः पित्तोष्णपूर्वेशदृढश्चतुष्पात्। समोदयो दीर्घरवोऽल्पसङ्गप्रजो हरिः शैलनृपोग्रधूम्रः ॥ ५ ॥ पांडुर्द्विपात्स्त्री द्वितनुर्यमाशा निशामरुच्छीतसमोदयोष्णः। कन्यार्द्धशब्दा शुभभूमिवैश्या रूक्षाऽल्पसङ्गप्रसवा शुभा च ॥ ६ ॥ पुमाँश्चरश्चित्रसमोदयोष्णः प्रत्यङ्मरुत्स्निग्धरवो न वन्यः। स्वल्पप्रजासंगमशूद्र उग्रस्तुलो ध्रुर्वीर्यो द्विपदः समानः ॥ ७ ॥ स्थिरः सितः स्त्री जलमुत्तरेशो निशारवो नो बहुपात्कफी च। समोदयो वारिचरोऽतिसंगप्रजः शुभः स्निग्धतनुर्द्विजोऽलिः ॥ ८ ॥ ना स्वर्णभाः शैलसमोदयोऽतिशब्दो दिनं प्राग्दृढपीतरूक्षः। राजोष्णपित्तो धनुरल्पसूतिसंगो द्विमूर्तिर्द्विपदोऽग्निरुग्रः ॥ ९ ॥ मृगश्चरक्षमार्द्धरवो यमाशा स्त्रीपिंगरूक्षः शुभभूमिशीतः। स्वल्पप्रजासंगसमीररात्रिरादौ चतुष्पाद्विषमोदयोविट् ॥ १० ॥ कुम्भोऽपदो ना दिनमध्यसंगप्रसूः स्थिरः कर्बुरवन्यवायुः। स्निग्धोऽष्णखण्डस्वरतुल्यधातुः शूद्रः प्रतीची विषमोदयोग्रः ॥ ११ ॥ मीनोऽपदः स्त्री कफवारिरात्रिनिःशब्दबभ्रुर्द्वितनुर्जलस्थः। स्निग्धोऽतिसंगप्रसवोऽपि विप्रः शुभोत्तराशेड्विषमोदयश्च ॥ १२ ॥ धराम्बुनोरग्निसमीर योश्च वर्गे सुहृत्त्वं परतोऽरिभावः। चापान्त्यभागस्य चतुष्पदत्त्वं ज्ञेयं मृगान्त्यस्य जलेचरत्वम् ॥१३॥ पित्तानिलौ धातुसमः कफश्च त्रिमेषतः सूरिभिरूहनीयः। राजन्यविट्शूद्रधरासुराश्च सर्वे फलं राश्यनुसारतः स्यात् ॥ १४ ॥" ॥ ४ ॥ ५ ॥

इति कर्पूरस्थलीयदैवज्ञदुनिचन्द्रात्मज ( शोरि )" पंडितविष्णु
दत्तकृतटीकायां मौष्टिकप्रश्नाध्यायः पञ्चमः ॥ ५ ॥

**भाषार्थ**-अब ग्रहोंका स्वरूप लिखते हैं-सूर्य क्षत्रिय ( राजा ) है और पुरुष-दरमियान गोल है, मध्य दिनबली, पूर्वदिशाका तथा सुवर्ण चौपायोंका स्वामी और उग्र ( प्रचन्ड ) है, सत्वप्रकृति, स्थिर है; तिक्तरसका स्वामी, पशुभूमिका स्वामी, पित्त अधिक, बूढा ( वृद्ध ) पाटलवर्ण, मूल वृक्षादिका स्वामी और वनमें विचर-नेवाला है ॥ १ ॥ चन्द्रमा वैश्य और स्त्री है, जलयुत पृथिवीको स्वामी, तपस्वी है, गौरवर्ण है, अपराह्णका स्वामी, जलचारी, धातुका स्वामी, सत्त्वप्रकृति, वायुको-णका स्वामी, कफप्रकृति, सर्पका तथा रूप्यका स्वामी, बडा पुष्ट, जवान, क्षार ( ऊषरभूमि ) का स्वामी, शुभ श्वेतप्रभा है ॥ २ ॥ मंगल तमप्रकृति, पित्तस्वभाव, जवान, उग्र, वनचारी, मध्याह्नबली और धातुस्वामी, दक्षिणका स्वामी, चौपायोंका स्वामी, पुरुषोंका स्वामी; चौकोण, सुवर्णकार और दग्ध पृथिवीका स्वामी, व्यंग, कटुरस प्रिय, रक्तवर्ण है ॥ ३ ॥ बुध ग्रामनिवासी, शुभ, नीलवर्ण, सुवर्णका स्वामी, गोलाकार, बाल अवस्था, इष्टके स्थानका स्वामी, समधातु, जीव, श्मशानपृथिवीका स्वामी, स्त्री, उत्तरदिशाका स्वामी, प्रभातबली, शूद्र, पक्षीका स्वामी, सर्व रसोंके जाननेवाला बुध है । रस ६ हैं जैसे कटु अम्ल तिक्त कषाय लवण मधुर ॥ ४ ॥ बृहस्पति प्रभातबली, पुरुष, शुभ, ईशानका स्वामी, ब्राह्मण, पीतवर्ण, द्विपाद, ग्रामचारी, गोल. जीव, वणिक्, मधुर रसका स्वामी, देवमंदिरका स्वामी, वृद्ध, रत्नसहित, समधातु, सत्त्वप्रकृति है ॥ ५ ॥ शुक्र शुभ है, स्त्री, जलचारी, अपराह्णका स्वामी, श्वेतवर्ण कफप्रकृति, रूप्य और रज-प्रकृति, अम्ल मूलका स्वामी, ब्राह्मण, अग्निकोणका स्वामी, मध्य अवस्था, कामका स्वामी, जलकी पृथिवीका स्वामी, स्निग्ध कान्तिवाला द्विपाद है ॥ ६ ॥ शनि पक्षी वायुप्रकृति, वनचारी, संध्याका स्वामी, शूद्र, स्त्री, सम धातु, स्थिर, क्रूर, पश्चिमका स्वामी, तुवररस, बडा वृद्ध, उत्कर अर्थात् अवकर जिस स्थानमें भस्म पांसु तृणादि हो उस पृथिवीका स्वामी, बडा लंबा, नीलवर्ण, लोहेका स्वामी है ॥ ७ ॥ राहुका स्वरूप शनिवत् है, परन्तु जाति निषाद, सर्प, अस्थि, निर्ऋति-कोणका स्वामी है । केतु शिखावाला अनेक रूपधारी है । अब राशियोंके स्वरूप निरूपण करते हैं-इनके ज्ञानसे संपूर्ण प्रश्न जातक ताजिक मुहूर्त फल यथावत् कहसक्ता है इसलिये इनका ज्ञान आवश्यक है । पृथक् राशियोंके स्वरूप लिखते हैं कि, मेषराशि पुमान् है, चर है, अग्नितत्त्व, दृढ अंग, चतुष्पद ( मेढा ), रक्तवर्ण

( उष्ण ) गर्मीका स्वभाव, पित्तप्रकृति, बडे शब्दवाली, पर्वतोंमें फिरनेवाली, ( उग्र ) तीक्ष्ण स्वभाव ( पीन ) मोटी, दिनमें बली, पूर्वकी स्वामी, विषम उदय, न्यून ( संग ) भोग और प्रजावाली, रूखी क्षत्रियवर्ण है ॥ १ ॥ वृषराशि स्थिर, स्त्री, पृथिवीपर फिरनेवाली, शीतस्वभाव, रूखी दक्षिणकी स्वामी, अच्छी भूमिमें रहनेवाली, वायुतत्त्व, रात्रिमें बली, चौपाई, श्वेतवर्ण, बडे शब्द, विषम, उदय, मध्यम संग और प्रजावाली, शुभ, वैश्य होती है ॥ २ ॥ मिथुनराशि पश्चिमकी स्वामी, वायुतत्त्व, शुक ( तोते ) की तरह हरित, द्विपाद, ( ना ) पुरुष स्त्री पुरुष दो, द्विस्वभाराशि, विषम उदय, उष्णस्वभावं, मध्यसंतान तथा रति, वनचारी, शूद्र, दीर्घशब्दवाली, स्निग्ध शरीर, दिनकी स्वामी, उग्र होती है, ॥ ३ ॥ कर्कराशि बहुत प्रजा, बहुत संभोग और बहुत पदवाली है चर, स्त्री पाटल ( गुलाब ) का वर्ण, शब्दरहित, शुभ कफप्रकृति, स्निग्ध तनु, जलतत्त्व, जलचारी, समान उदय,ब्राह्मण, निशाबली उत्तरकी स्वामी ॥ ४ ॥ सिंह राशि पुरुष होती है, स्थिर, अग्नितत्त्व, दिनबली, पीतवर्ण, रूक्षदेह, पित्तप्रकृति, गरमीका स्वभाव, पूर्वकी स्वामी, दृढांग, चौपाया, सम उदय, बडे शब्दवाली, न्यून संग, अल्प संतान, शैलचारी, क्षत्रिय वर्ण, उग्र, धूम्रवर्ण होती है ॥ ५ ॥ कन्याराशि पाण्डुवर्ण, द्विपादवाली, स्त्री, द्विस्वभाववाली, दक्षिणकी स्वामी, रात्रिबली, वायुतत्त्व, शीतस्वभाव, सम उदय, उष्ण, अर्द्धशब्दवाली, शुभभूमिमें रहनेवाली, वैश्या, रूक्षदेह, अल्प संतानवाली शुभ है ॥ ६ ॥ तुलाराशि पुमान्, चर, चित्रवर्ण, समोदय, उष्णस्वभाव, पश्चिमकी स्वामी, वायुतत्त्व, स्निग्धदेह, शब्दरहित, वनचारी, अल्पसंग तथा प्रजा, शूद्रवर्ण, उग्र, दिनबली, द्विपद समान होती है ॥ ७ ॥ वृश्चिकराशि स्थिर, ( सित ) श्वेतवर्ण, स्त्री, जलतत्त्व, उत्तरकी स्वामी, रात्रिबली, शब्दरहित, बहुत पादवाली, कफप्रकृति, समोदय, जलमें विचरनेवाली, अत्यंत संग तथा प्रजा, शुभ, स्निग्ध शरीरवाली, ब्राह्मण होती है ॥ ८ ॥ धनराशि पुरुष है, सुवर्णसा रंग है; पर्वतचारी, सम उदय, बडे शब्दवाली, दिनबली, पूर्वकी स्वामी, दृढशरीर, रूक्ष, पीत, क्षत्रिय, उष्णस्वभाव, पित्तप्रकृति, अल्प संतान तथा संग, द्विमूर्ति अर्थात् पूर्वभाग पुरुषका उत्तरभाग अश्वका, द्विपद, अग्नितत्त्व, उग्र स्वभाव होती है ॥ ९ ॥ मकर चर है, पृथिवी तत्त्व है, अर्द्ध शब्द है, दक्षिणकी स्वामी, स्त्री है, पिंगलवर्ण, रूखा शरीर है, शुभभूमिमें रहनेवाली, शीतस्वभाववाली,

अल्प संग तथा प्रजावली, वायुतत्त्व है, रात्रिबली है, आदिमें चार पाद हैं, विषमोदय है वैश्य है ॥ १० ॥ कुंभराशि अपद होती है, पुरुष राशि है, दिनबली, मध्य संग प्रजा, दिनबली, स्थिर हैं, कर्बुरवर्ण है, वनचारी है वायुप्रकृति है, स्निग्ध शरीर है, उष्णस्वभाव, खंड स्वर [ भिन्न शब्द ] तुल्य धातु, शूद्र है, पश्चिमकी स्वामी, विषमोदय, तीक्ष्ण स्वभाव होती है ॥ ११ ॥ मीनराशि पदरहित, स्त्री, कफप्रकृति, जलचारी, रात्रिबली, शब्दरहित, बभ्रुवर्ण, द्विशरीर है, जलचारी है, स्निग्ध है, अत्यंत संग और प्रजा है, ब्राह्मण है, शुभ है, उत्तरकी स्वामी, विषम उदय है ॥ १२ ॥ अथ मैत्री–पृथिवी जलकी आपसमें मैत्री होती है, वायुकी अग्निसे मैत्री है। और जलकी अग्निसे; पृथिवीकी वायुसे शत्रुता है। धनुषका अंत्यभाग चौपाया है। मृगका अंत्यभाग जलचारी है ॥ १३ ॥ और मेष सिंह धनराशि पित्त प्रकृति है, तथा वृष कन्या मकरकी वायु प्रकृति है। और मिथुन तुला कुंभकी धातु सम है। कर्क वृश्चिक मीनकी कफप्रकृति है। इसी प्रकार १ । ५ । ९ क्षत्रिय, २ । ६ । १० वैश्य, ३ । ७ । ११ शूद्र, ४ । ८ । १२ राशि ब्राह्मण होती हैं। ग्रहों तथा राशियोंके स्वरूपसे फल शुभाशुभ, नष्ट लाभ चौर पुरुष परीक्षादि जानने ॥ १४ ॥ विस्तारके भयसे आगे उदाहरण नहीं लिखते बुद्धिमान् इसी प्रकार राशि ग्रह स्वरूप विचारकर धातु, मूल, जीव नष्टवस्तु, चौरलक्षण दिशाका ज्ञान चौरकी जाति अवस्था आदि कहें ॥ ४–५ ॥

इति श्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शौरी ) अन्वयालंकृतिदैवज्ञदुनिचंद्रात्मजपंडितविष्णुदत्तवैदिककृतप्रश्नचण्डेश्वरभाषाभावार्थे मौष्टिकप्रश्नाध्यायः पंचमः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ६.

### अथ गमागमप्रश्नः ।

त्रिकोणे कुजात्सौरिशुक्रज्ञजीवा यदैकोऽपि वा नो गमोऽर्काच्छशी वा ।
बलीयाँस्तु मध्ये तयोर्यो ग्रहः स्यात्स्वकीयां दिशं प्रत्युतासौ नयेच्च ॥१॥

विष्णुपदी–अथ गमागमप्रकरणं प्रारभ्यते । तत्र प्रष्टुर्गमनमाह–त्रिकोण इति । कुजाद्भूमिपुत्रात् त्रिकोण नवमपञ्चमे यदि सौरिः शनैश्वरः, शुक्रो भृगुः, ज्ञो बुधो,

जीवो बृहस्पतिरेते व्यस्ताः समस्ता वा स्युः,। " वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये। " वा पक्षान्तरम्। अर्कात्सूर्यात् त्रिकोणे शशी चन्द्रमाः स्यात्तदा प्रष्टुर्जनस्य गमनं न स्यात् प्रत्युत। तुशब्दोऽवधारणे। एषां मध्ये यो बली बलवान् ग्रहः स स्वदिशि ग्रामान्तरस्थं नयेत्। ग्रहाणां दिक्स्वामिता पूर्वमुक्ता। अत्र भुजंगप्रयातं नाम च्छंदः। उक्तंच पिंगलेन-" भुजंगप्रयातं यः " वृत्तरत्नाकरे तु-" भुजंगप्रयातं भवेद्यैश्चतुर्भिः" श्रुतबोधे तु-"यदाद्यं चतुर्थं तथा सप्तमं चेत्तथैवाक्षरं ह्रस्वमेकादशाद्यम्। शरच्चंद्रविद्वेषिवक्त्रारविन्दे तदुक्तं कवीन्द्रैर्भुजंगप्रयातम्॥ " इति॥ यगणस्वरूपमादिलघुर्यः यथा ( । ऽऽ ) इति॥ १॥

भषार्थ-मंगलसे नवम पंचम शनि, शुक्र, बुध, बृहस्पति यह इकट्ठे वा जुदे २ होंय अथवा सूर्यसे नवम पंचम चन्द्रमा होय तो पुरुषका अभीष्टदिशाको गमन नहीं होता है। प्रत्युत उन ग्रहोंके मध्यमें जो बली होय वह अपनी दिशाको पथिक पुरुषको ले जाता है॥ १॥

**चरोदये शीतकरे स्थिरर्क्षे सौम्यग्रहैः संयुतवीक्षितैर्वा। यात्रा भवेत्सौख्यजयार्थसिद्ध्यै कल्याणदात्री निरुपद्रवा च॥ २॥**

विष्णुपदी-पृच्छकस्य शुभावहां यात्रामाह-चरोदय इति। चरोदये चरराशिगतलग्ने शीतानि शीतलानि किरणानि मयूखानि यस्य तस्मिन् शीतांशौ स्थिरर्क्षे स्थिरराशिस्थिते। सौम्यग्रहैः शुभग्रहैः संयुतैः संयुक्तैर्वा विकल्पान्तरं वीक्षितैः पूर्णदृष्ट्या चंद्रं लग्नं वा। सौख्यं च जयश्चार्थश्च तेषां सिद्ध्यै साधनाय, कल्याणस्यशुभस्य दात्री, उपद्रवो विघ्नप्राचुर्य्यं तद्रहिता यात्रा भवेत्। "श्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभम्" इत्यमरः। अत्रोपजातिनामच्छंदस्तल्लक्षणं वृत्तरत्नाकरे-" अनंतरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः " इति॥ २॥

भाषार्थ-यात्रा प्रश्नसे कहते हैं-चरलग्न होय, चन्द्रमा स्थिरराशिगत होय, सौम्य ( शुभ ) ग्रह लग्नमें होय वा लग्नको देखें तो यात्रा सौख्य जय धनकी प्राप्ति करनेवाली और कल्याणकी देनेवाली, उपद्रवविघ्नरहित अर्थात् निर्विघ्न श्रेष्ठ यात्रा होती है॥ २॥

**स्थिरोदये शीतकरे स्थिरर्क्षे पापग्रहैः संयुतवीक्षितैर्वा। प्रष्टुः प्रवासो न भवेत्स्वधाम्नः स्थितिः प्रदिष्टा सुखसिद्धये च॥ ३॥**

विष्णुपदी-स्थिरोदये स्थिरलग्ने, शीतकरे चन्द्रे स्थिरराशौ पापग्रहैः क्रूरग्रहैः संयुतैः संयुक्तैर्वा पूर्णदृष्ट्या वीक्षितैः प्रष्टुः पृच्छकस्य स्वस्मात्स्थानात् प्रवासो यात्रा न भवेत् प्रत्युत सुखादिकार्यसम्पादिका स्थितिः प्रदिष्टा पूर्वाचार्य्यैरिति भावः ॥ ३ ॥

भाषार्थ-स्थिरलग्न हो और स्थिरराशिमें चन्द्रमा होवे और क्रूरग्रहोंसे युत होवे वा पूर्णदृष्टिसे देखा जाता हो तो प्रश्नकर्ताकी यात्रा देशांतरमें नहीं होती और स्थिति सुखकी देनेवाली गृहमेंही होती है ॥ ३ ॥

**व्यङ्गोदये व्यङ्गगते हिमांशौ पापग्रहैर्दृष्टिगतैर्न सौम्यैः । प्रष्टुर्निवृत्तिः परदेशयाने क्लेशार्थनाशोऽरिपराजयश्च ॥ ४ ॥**

विष्णुपदी-व्यङ्गोदये द्विदेहोदये लग्ने, द्विस्वभावराशिगते चन्द्रे पापग्रहैस्तत्र युक्तैर्वा पूर्णदृष्ट्या दृष्टैर्वीक्षितैर्न सौम्यैर्दृष्टैस्तदा प्रष्टुः पृच्छकस्य परदेशयाने गमने निवृत्तिं पुनरागमनं, क्लेशं दुःखम्, अर्थस्य धनस्य नाशं चारितः पराजयं च निर्दिशेत् ॥४॥

भाषार्थ-द्विस्वभाव प्रश्नलग्न होय और द्विस्वभाव राशिगत चन्द्रमा होय, पापी ग्रह पूर्णदृष्टिसे देखे, सौम्यग्रहोंकी दृष्टि न होय वा पापी लग्नगत होवे तो प्रश्नकर्ता परदेशसे निवृत्ति आगमन कहे और क्लेश, धनादिनाश, शत्रुसे भय यह कहे ४

**क्रूरे कलत्रे हि व्रजेद्यदर्थं तत्कार्यनाशो गमनं च न स्यात् । पापग्रहैः कर्मगतैर्न यात्रा स्याज्ज्येष्ठबंधोर्नृपतेर्निषेधात् ॥ ५ ॥ त्रिलाभषष्ठोपगतैश्च पापैर्यात्राप्रयाणादिषु संक्षयः स्यात् । मार्गान्निवृत्तिश्च रसातलस्थे भूयो ग्रहैः केन्द्रगतैश्च सिद्धिः ॥ ६ ॥**

विष्णुपदी-प्रश्नलग्नात्कलत्रे सप्तमस्थाने क्रूरे ग्रहे सति यदर्थमुद्दिश्य व्रजेत्तदर्थस्य कार्यस्य नाशो गमनं च न भवेत् । कर्मगतैर्दशमस्थितैः पापग्रहैर्न यात्रा भवेत् ज्येष्ठबन्धोर्निषेधात् उत नृपतेर्निषेधाद्वा ॥ ५ ॥ त्रिलाभे, तृतीये, एकादशे, षष्ठे पापैरुपगतैः प्राप्तैर्यात्राप्रयाणादिषु व्रजतः पुरुषस्य सम्यक् क्षयो नाशः स्यात् । यात्रा गमनमात्रं, प्रयाणं दीर्घकालपरदेशस्थितिरित्यनयोर्भेदः। रसातलस्थे चतुर्थस्थे ग्रहे मार्गादेव निवृत्तिर्यातुरादिशेत् । यदि केंद्रगतैर्भूयो ग्रहैः शुभैरिति शेषस्तदा यात्रायां सिद्धिः स्यात् । उक्तं च षट्पंचाशिकायाम्-"च्युतिर्विलग्नाद्धिबुकाच्च वृद्धिर्मध्यात्प्रवासोऽस्तमयान्निवृत्तिः । वाच्यं ग्रहैः प्रश्नविलग्नकालाद्गृहं प्रविष्टो हिबुके प्रवासी ॥" इति ॥ ६ ॥

भाषार्थ-यदि प्रश्नलग्नसे सप्तमस्थानमें क्रूर ग्रह होवे तो जिस कार्यके लिये पुरुष यात्रा करे वह नष्ट हो जाता है और यात्राभी नहीं होती। यदि प्रश्नलग्नसे दशवें स्थानमें पापी ग्रह होय तो ज्येष्ठ भाई या राजाके मना करनेसे यात्रा नहीं होय। यदि तीसरे वा एकादश षष्ठ स्थानमें पापी ग्रह होवे तो यात्रा और प्रवासमें क्षय ( नाश ) होता है। यदि पापी ग्रह चतुर्थ स्थित होवे तो पथिककी मार्गसेही निवृत्ति होती है, यदि केंद्र १।४।७।१० स्थानमें शुभग्रह होवे तो यात्रासे सिद्धि होती है ॥ ५ ॥ ६ ॥

लग्नेशकर्माधिपती च लग्ने केंद्रायगौ श्रेष्ठफलं प्रयाणात्। धने स्थिरे भूरिधनस्य लाभस्तुर्यें च यातुः सुखसंपदः स्युः ॥ ७ ॥ लग्ने शुभे देहसुखं शुभाढ्यं सौख्यार्थलाभः शुभकार्यसिद्धिः। सुखस्थिते सौख्यजयार्थलाभाः स्युः कार्यसिद्धिर्विविधांबराप्तिः ॥ ८ ॥

विष्णुपदी-प्रयाणे सुखमाह-लग्नेशेति। लग्नेशो लग्नस्वामी, कर्मेशो दशमस्वामी लग्ने स्यातां वा केंद्रे लग्नचतुर्थसप्तदशमस्थाने, आये एकादशे स्यातां तदा प्रयाणाच्छ्रेष्ठफलं भवति। धने द्वितीयस्थाने स्थिरराशौ धनस्य लाभो भविष्यति। तुर्ये चतुर्थे स्थिरर्क्षे यातुः पुरुषस्य सुखसंपदादीनां लाभः स्यात् ॥ ७ ॥ लग्ने शुभे शुभग्रहदृष्टियुक्ते देहस्य सुखं शुभाढ्यं, सौख्यस्य अर्थस्य धनस्य च लाभः कार्यसिद्धिश्च स्यात्। सुखस्थिते चतुर्थस्थिते शुभग्रहे दृष्टौ वा सौख्यजयार्थलाभाः स्युः। कार्यस्य सिद्धिर्विविधानामनेकेषामम्बराणां वस्त्राणामाप्तिः प्राप्तिश्च स्यात् ॥ ८ ॥

भाषार्थ-यदि लग्नेश दशमेश लग्नगत होंय अथवा केंद्र १।४।७।१० एकादशस्थानमें होवे तो प्रयाणसे श्रेष्ठ फल होता है यदि प्रश्नलग्नसे धनस्थानमें स्थिरराशि होवे तो बहुत धनका लाभ होता है। यदि चतुर्थराशि स्थिर होवे तो सुख संपदा पांथको होती है ॥ ७ ॥ यदि लग्नमें शुभग्रह होय तो देहको सुख ( सौख्य ) अर्थका लाभ होता है और कार्यकी सिद्धि होती है। यदि चतुर्थ शुभ ग्रह युक्त होवे तो सौख्य, जय, धनलाभ, कार्यसिद्धि और अनेक प्रकारके वस्त्रोंकी प्राप्ति होती है ॥ ८ ॥

शुभोऽस्तगो यत्र च याति गत्या तत्रास्ति रम्या धनवाहनाप्तिः। धनस्थिते सौख्यजयार्थलाभः केन्द्रे च कोणे शुभकार्यसिद्धिः ॥ ९ ॥

विष्णुपदी-अथ कस्मात्स्थानाद्धनप्राप्तिर्भविष्यतीति प्रश्ने यातुर्धनप्राप्तिमाह-

शुभोऽस्तग इति अस्तं सप्तमं गच्छतीति सप्तमस्थितःशुभग्रहो यत्र स्थाने गत्या याति तत्र स्थाने यातुः पुरुषस्य रम्या रमणीया धनवाहनाप्तिः प्राप्तिरस्ति।धनस्थिते सौम्यग्रहे सौख्यजयार्थलाभः स्यात् । केंद्रे चतुष्टये, कोणे नवमपञ्चमे, शुभस्य कार्यस्य सिद्धिः स्यात् ।" कंटककेंद्रचतुष्टयसंज्ञासप्तमलग्नचतुर्थखभानाम् " इति वराहाचार्यः ॥९॥

भाषार्थ-सप्तगत शुभग्रह जिस स्थान ( राशि ) में स्वगतिसे जाय वहाँ पथिकको बडा अच्छा सौख्य धन और वाहनकी प्राप्ति कहे। यदि शुभग्रह धनस्थानमें प्रश्नलग्नसे स्थित होवे तो सौख्य जय अर्थका लाभ कहे, यदि शुभग्रह केन्द्र स्थान १ । ४ । । ७ १० त्रिकोण ९ । ५ में होय तो शुभ कार्यकी सिद्धि होती है ॥९

मार्गस्थं पथिकं ब्रूते द्यूने चंद्रो व्यवस्थितः ।
मार्गनाथेन युग्दृष्टः पथिकागमनं तथा ॥ १० ॥

विष्णुपदी-द्यूने सप्तमस्थाने। " द्यूनं च सप्तगृहम् " इति वराहः । चन्द्रमा व्यवस्थितो मार्गस्थं मार्गे तिष्ठंतं पथिकं ब्रूते । मार्गनाथेन मार्गस्वामिना युक्ते दृष्टे वा चंद्रे तदा तस्मिन्काले पथिकस्य आगमनं वदेत् ॥ १० ॥

भाषार्थ-यदि चन्द्रमा प्रश्नलग्नसे सप्तमस्थानमें होय तो पथिक मार्गमें स्थित कहदे, यदि मार्गनाथसे चन्द्रमा युक्त वा दृष्ट होय तो उस काल परदेशी आ जाता है ॥ १० ॥

लाभेशकर्मायगते स्वकार्यं तदा शुभं सिद्धयति पृच्छकस्य । तृतीयगे वा नवमे धनेशे कृत्वा स्वकार्यं स्वपुरे प्रयाति ॥ ११ ॥

विष्णुपदी-पथिकः कार्यं कृत्वाऽऽगमिष्यति न वेति प्रश्ने । लाभेशे एकादशेशे कर्मायगते दशमैकादशस्थिते तदा पृच्छकस्य प्रष्टुः शुभं स्वकार्यं सिद्धयति । धनेशे द्वितीयेशे । तृतीय स्थानस्थिते वा नवमस्थिते सति स्वकार्यं कृत्वा पान्थः स्वपुरे प्रयाति इति पृच्छकस्य प्रश्नलग्नाद्वाच्यम् ॥ ११ ॥

भाषार्थ-यदि लाभेश दशवें वा एकादशस्थानमें होय तो पांथको शुभकार्यकी सिद्धि होती है, वा धनेश तृतीयस्थान वा नवमस्थानमें हो तो अपने कार्यको कर पथिक अपने नगरको आता है ॥ ११ ॥

शीतांशुलग्नेश्वरवित्तपानां केन्द्रस्थितानां शुभखेचराणाम् । शुभग्रहैर्वीक्षितसंयुतानां श्रेष्ठं फलं व्यस्तमसद्ग्रहाणाम् ॥ १२ ॥

विष्णुपदी-अथ सामान्यतः शुभाशुभमाह-यत्रायाम् । शीतांशुश्चन्द्रमाः, लग्ने

श्वरः लग्नस्वामी, वित्तपो धनस्वामी तेषां चन्द्रलग्नवित्तपानां शुभखेचराणां पूर्णचंद्रबुधशुक्रगुरूणां केन्द्रे संस्थितानाम् । शुभग्रहैः सौम्यखगैर्वीक्षितानां वा संयुक्तानां श्रेष्ठं फलं स्यात् । असद्ग्रहाणां केंद्रस्थितानां वा क्रूरयुतदृष्टानां व्यस्तं विपरीतमशुभमिति यावत्फलं ज्ञेयम् ॥ १२ ॥

**भाषार्थ**–अब सामान्यसे शुभाशुभ कहते हैं–चन्द्रमा लग्नेश धनेश और शुभग्रह केन्द्रस्थानोंमें स्थित होवें वा पूर्णदृष्टिसे लग्नको वा केंद्रस्थानको देखे तो शुभ फल होता है। यदि पापी ग्रह केंद्रोंमें होय वा देखें वा गत होयं तो विपरीत (अशुभ) फल होता है ॥ १२ ॥

अथ दिनसंख्या (क्षेपक)।

**सर्वोत्तमबलो लग्नाद्यस्मिन्स्थाने ग्रहः स्थितः ।**
**मासैस्तत्तुल्यसंख्याकैर्निवृत्तिं यातुरादिशेत् ॥ १३ ॥**

**विष्णुपदी**–सर्वोत्तमबलः सर्वग्रहाणां मध्ये अधिकबली प्रश्नलग्नाद्यस्मिन् स्थाने राशौ स ग्रहः स्थितस्तत्तुल्यसंख्याकैर्मासैर्यातुः पान्थस्य निवृत्तिम् आदिशेत् । यथोदाहरणम्–अधिकबली सूर्यः प्रश्नलग्नात्सप्तमस्थाने तदा सप्तमासावधिक यातु परदेशादागमन वाच्यम् ॥ १३ ॥

**भाषार्थ**–सर्वग्रहोंसे अधिक बली जिस स्थानमें प्रश्नलग्नसे स्थित होवे उतने मासपर्यंत विदेशी गृहको आ जाता है ॥ १३ ॥

**चंद्रे दिनानि वाच्यानि भानौ मासावधिं वदेत् । जीवे प्रश्नगते चैव वर्षमात्रं विनिर्दिशेत् । अष्टमासावधिर्लाभो भौमे लग्ने समादिशेत ॥ १४ ॥ बुधे मासावधिर्लाभो राहौ लग्नगते तथा । विचार्य्य सुमहद्बुद्ध्या ब्रूयात्सर्वं सुनिश्चितम् ॥ १५ ॥**

**विष्णुपदी**–सर्वोत्तमबलो लग्नाद्यस्मिन्राशौ चंद्रः स्थितस्तावद्दिनानि वाच्यानि, एवं बलवति भानौ सूर्ये लग्नस्थे मासो वाच्यः । जीवे बलाढ्ये संवत्सरं, भौमे बलिनि लग्नगते अष्टमासं, बुधे बलयुक्ते तनुस्थे मासं, भृगौ शुक्रे हायनमब्दं, राहुकेतुभ्यां षण्मासानन्तरम् आगमनं वाच्यम् ॥ १४ ॥ १५ ॥

**भाषार्थ**–सर्व ग्रहोंसे बली लग्नसे जिस राशिमें चन्द्रमा होवे उतने दिन आगमनमें कहै। इस प्रकार सूर्य बलयुक्त होवे तो उतने मास कहै। यदि बृहस्पतिजी होवे तो उतने बरस कहै। यदि भौम मंगल बलयुक्त होवें तो अष्टमास कहै, बुध

होय तो एक मास, शुक्र होय तो एक बरस, राहु, केतु होवें तो छः मास आनेमें होते हैं ॥ १४ ॥ १५ ॥

**विलग्नचन्द्रान्तरभागनिघ्नं यात्राविलग्नेष्टमिहाग्निभक्तम् ।**
**आयाति राज्यं खलु लब्धमासैर्दिनैर्घटीभिश्च यथाप्रदेशम् ॥ १६ ॥**

**विष्णुपदी**-यात्राविलग्नेष्टं लग्नचन्द्रांतरभागनिघ्नं कार्यं पुनः गुणैस्त्रिभिर्भागो देयस्तुल्यमासैर्घटीभिश्च धनादिकं लब्ध्वा आयाति । उक्तं च षट्पंचाशिकायाम्- " दूरगतस्यागमनं सुतधनसहजस्थितैर्ग्रहैर्लग्नात् । सौम्यैर्नष्टप्राप्तिं लघ्वागमनं गुरुसिताभ्याम् ॥ १ ॥ जामित्रे त्वथवा षष्ठे ग्रहः केंद्रेऽथ वाक्पतिः । प्रोषितागमनं विद्यात्त्रिकोणे ज्ञसितेऽपि वा ॥ २ ॥ अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः । प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः ॥ ३ ॥ पृष्ठोदये पापनिरीक्षिते वा पापास्तृतीये रिपुकेन्द्रगे वा । सौम्यैरदृष्टा बधबंधदाः स्युर्नष्टा विनष्टा मुषिताश्च वाच्याः ॥ ४ ॥ ग्रहो विलग्नाद्यतमे गृहे तु तेनाहता द्वादशराशयः स्युः । तावद्दिनान्यागमनस्य विद्यान्निवर्तनं वक्रगतैर्ग्रहैस्तु ॥ ५ ॥ " पृष्ठोदय इति । पृष्ठोदयाः मेषवृषकर्कटधन्विमकरा पृष्ठोदये पृच्छालग्ने एतेषामन्यतमेतस्मिंश्च पापनिरीक्षिते । वा शब्दोऽत्र चार्थे । एवंविधे योगे प्रवासिनो वधस्ताडनं बंधो बंधनं भवेत् । अथवा पापा अशुभग्रहा लग्नात्तृतीयस्थाने स्थिताः सर्व एते च सौम्यैः शुभग्रहैरदृष्टा अनवलोकितास्तदा प्रवासिनो नष्टास्तस्मात्स्थानादन्यदेशं गता अथवा पापा लग्नाद्रिपुस्थाने वा गतास्ते च सौम्यैरदृष्टास्तदा प्रवासिनो मुषिताश्चौरैर्वापहृताः स्युर्भवेयुः । वाशब्दो योगानां विकल्पार्थः । वधबंधदाः स्युरिति पापानां विशेषणम् । अधुना प्रवासिनामागमनकालज्ञानमाह-ग्रहो विलग्नादिति । विलग्नात्पृच्छालग्नाद्यतमे यावत्संख्ये राशौ यः कश्चिद्ग्रहः स्थितः स च स्पष्टगतिस्तिष्ठेत्तेन तत्प्रमाणेन द्वादशराशय आहता गुणिताः कार्याः । एतदुक्तं भवति द्वादशसंख्यमंकं स्थाप्य लग्नात्प्रभृति ग्रहान्तरं राशिसंख्यया गुणयेत् । तत्र यावत्संख्यानि तावत्संख्यानि दिनानि प्रवासिन आगमनस्य विद्याज्जानीयात्तावद्भिर्दिनैः पथिक आगच्छतीत्यर्थः । निवर्तनं वक्रगतैरिति । अथ स ग्रहो वक्रगतिः प्रतीपगतिस्तदा तावत्संख्यैर्दिनैः प्रवासिनः प्रवासान्निवर्तनं भवतीति भट्टोत्पलः ॥ १६ ॥

**भाषार्थ**-यात्रालग्नेष्टको चन्द्रमा और लग्न इनके अंतर्गत जितने अंक होवें उनसे [illegible]कर तीनसे भाग दे लब्ध मास घटीमें पथिक आता है । अब षट्पंचा-

शिकाकारका आशय लिखते हैं। प्रश्नलग्नसे यदि पंचम द्वितीय तृतीय स्थानमें सभी ग्रह होवें तो दूरदेशगत पुरुष आ जाता है। यदि पूर्वोक्त स्थानमें शुभ ग्रह होवें तो नष्ट वस्तुकी प्राप्ति होती है। यदि शुक्र बृहस्पति होय तो शीघ्र आता है। अथवा सप्तम षष्ठ केंद्रमें बृहस्पति होवे। अथवा नवम पंचम स्थानमें बुध वा शुक्र होय। अथवा अष्टम स्थानमें चन्द्रमा होय। केंद्र स्थान पापी ग्रहोंसे रहित होवे तो प्रवासी पुरुष सुखपूर्वक आता है। यदि सौम्य ग्रह केंद्री होय तो धनलाभसहित आता है अथवा पृष्ठोदय राशि मेष वृष कर्क धन मकर यह लग्नगत होवें और पापी ग्रह लग्नको देखें तो प्रवासीको (वध) नाश (बंध) बंधन ताडन होता है। अथवा पापी ग्रह लग्नसे तीसरे स्थानमें स्थित होवे शुभ ग्रह न देखे तो प्रवासीको बन्धन वध देते हैं। अब प्रवासी गृहको कब आता है यह लिखते हैं। प्रश्नलग्नसे जिस राशिमें कोई स्पष्टगति बलवान् ग्रह होवे उस प्रमाणसे द्वादश १२ राशि गुण देना तो जितना अंक मिले उतने दिनको पथिक आवेगा। यदि वही ग्रह वक्रगति होवे तो उतने दिनोंकर प्रवाससे निवर्तन होता है। भावार्थ यह है कि, द्वादश १२ अंकको जिस राशिमें ग्रह होवे उतनेसे गुण दे तो जितने अंक मिले उतने दिनोंको प्रवासी आवेगा। उदाहरण-जैसे प्रश्नलग्न सिंहसे सूर्य चौथे स्थानमें है तो १२ को ४ से गुणा तो ४८ अठतालीस दिनको आवेगा। यदि वक्री होय तो यात्रासेही इन दिनोंमें फिर (लौट) आता है॥ १६ ॥

**तिथिप्रहरसंयुक्तास्तारका वारमिश्रिताः। सप्तभिश्च हरेद्भागं शेषं चैव शुभाशुभम् ॥ १७ ॥ प्रथमे संस्थितिस्तत्र द्वाभ्यामागमनं भवेत्। तृतीये चार्द्धमार्गस्थश्चतुर्थे यानमादिशेत् ॥ १८ ॥ पंचमे पुनरावृत्तिं षष्ठे व्याधिं विनिर्दिशेत् ॥ शून्ये शून्यं विजानीयाच्छारदावचनं यथा ॥ १९ ॥**

विष्णुपदी-अथ शीघ्रागमनमाह-तिथिप्रहर इति। प्रतिपदादिः प्रश्नकालिकतिथिः प्रहरो दिवस्य चतुर्थो भागस्तारकाभ्यां संयुक्तास्तारकाः नक्षत्राणि। 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वास्त्रियाम्' इत्यमरः। वारेण प्रश्नकालिकदिवसेन मिश्रितानि कार्याणि पश्चात्सप्तभिः सप्तसंख्याकैरंकैर्भागं हरेत् दद्यादित्यर्थः। शेष यल्लब्धमङ्कं तस्माच्छुभाशुभं ज्ञातव्यम्। एतदुक्तं भवति-प्रश्नकालीनतिथियामनक्षत्राणि तद्दिनेन संयोज्यानि सप्तभिर्भागे दत्ते यल्लब्धं तस्माद्वक्ष्यमाणफलमूहनीयम्। तद्यथा

प्रथमांके लब्धे तत्र देशान्तरे संस्थितिः कथनीया। द्वाभ्यामागमनं स्यात्। तृतीये शेषांके लब्धेऽर्द्धमार्गस्थः अर्द्धे मार्गे तिष्ठत्यधुना पथिकः। चतुर्थाङ्के लब्धे यानमादिशेत् यानारोहणं करोत्यधुना आगमनार्थमिति। पंचमांके लब्धे पुनरावृत्तिः प्रथममागत्य निवृत्त्य मार्गादधुना आगमनं कुरुते। षष्ठे लब्धे व्याधिना शरीरोत्थदुःखेन पीडितांगस्तत्रैव तिष्ठति। शून्ये लब्धे शून्यं देशान्तरे मृतः। शारदावचनं सर्वत्र दृढप्रत्ययार्थ मिति। यथोदाहरणम्- तिथिर्दशमी १०, प्रहरो द्वितीयः २, नक्षत्र रोहिणी४, चन्द्रवासरः २, एषामैक्यम् अष्टादश सप्तभिर्हृते शेषाश्चत्वारः फलं पूर्वोक्तं यानमादिशेदिति ॥ १७ ॥ १८ ॥ १९ ॥

भाषार्थ-तिथि, वार, नक्षत्र, प्रहर इनको इकट्ठे कर सातसे भाग देय जो लब्ध हो उसमें फल कहै। यदि एक मिले तो परदेशमें स्थित है दो मिलै तो आवेगा। तीन अंक मिलें तो अब अर्द्धमार्गमें है। चार मिलें तो आनेके लिये यानपर चढता है। पांच मिलें तो आकर फिर चला गया अब दूसरी बार आवेगा। छः मिलें तो वहीं व्याधिसे युक्तस्थित है। सात मिलें तो मृत्युको प्राप्त भया है॥ १७-१९

तिथिं वारं च नक्षत्रं पथिकाक्षरसंततिम्। एकीकृत्य मुनेर्भागं ज्ञातव्याऽऽगमनावधिः ॥ २० ॥ स्थानं क्षितौ बहिर्मार्गे चलच्चित्तं द्वितीयके। रामे वेदे भवेन्मार्गे पञ्चमेगृ हमागतः। षष्ठे रोगो भवेत्कश्चिच्छून्ये मृत्युं विनिर्दिशेत् ॥ २१ ॥

अथ प्रकारान्तरमाह-तिथिं शुक्लप्रतिपदादिं, वारं सूर्यादिं, नक्षत्रमश्विन्यादि तथा पथिकनामाक्षरसंततिं नामाक्षराणीत्यर्थः। एकीकृत्य मुनिभिः सप्तभिर्भागो दातव्यो यल्लब्धं तस्मात्फल वक्ष्यमाणं विचारणीयमिति। तद्यथैकशेषे बहिर्मार्गे आगमनार्थं स्थितो न तु प्रस्थितः। द्वितीयेऽङ्के, शेषे चलच्चित्तं गृहमहं गच्छामि वाऽत्रैव स्थास्यामि। रामे तृतीयेऽङ्के,वेदे चतुर्थेऽङ्के शेषे मार्गे भवेत्। पंचमेऽङ्के शेषे गृहमागतः। गृह्णाति धान्यादिकमिति गृहं 'गेहे कः' इत्यनेन कः प्रत्ययः विधीयते। "गृहं गेहोदवसितं वेश्म सद्म निकेतनम्" इत्यमरः। गृहमागमिष्यति। षष्ठे शेषे तच्छरीरे किंचिद्रोगं भवेत्। शून्ये शेषे मृत्युं विनिर्दिशेत् पृच्छकं प्रति पान्थस्येति ॥ २० ॥ २१ ॥

भाषार्थ-तिथि, वार, नक्षत्र, पथिक ( परदेशी ) के नामाक्षर इकट्ठे कर सातका भाग देवे फिर फल कथन करे। यदि एक अंक शेष मिले तो आनेके लिये मार्गमें होता है, यदि दो अंक मिले तो चलचित्त अर्थात् हम गृहको जायँ वा यहाँ रहें।

यदि तीन वा चार अंक मिलें तो मार्गमें परदेशी होता है। यदि पांच अंक शेष रहें तो गृहको अभी आता है। यदि षट् (६) अंक मिलें तो रोगयुक्त वहांही होता है। यदि शून्य लब्ध होवे तो मृत्यु कहै ॥ २० ॥ २१ ॥

रविरङ्गारको दूरे मार्गे शुक्रबृहस्पती ।
बुधचंद्रौ समीपस्थौ शनिराहू स्थिरं वदेत् ॥ २२ ॥

इति श्रीदैवज्ञरामकृष्णविरचितप्रश्नचण्डेश्वरे गमागमप्रश्नाध्यायः षष्ठः ॥६॥

विष्णुपदी–अथ ग्रहेभ्यो दूरादिज्ञानमाह–रविरङ्गारक इति। प्रश्नलग्ने रविरंगारकः सूर्यभौमौ दूरदेशे स्थितं पथिकं कथयतः। शुक्रश्च बृहस्पतिश्च तौ भृगुगुरू यदा लग्ने स्यातां तदा मार्गे पथिको वर्तते । बुधचंद्रौ लग्ने स्थितौ समीपस्थं समीपे स्थितं पथिकं ब्रुवाते। शनिराहू लग्नगतौ स्थिरं तत्रैव देशांतरे स्थितं विज्ञापयतः ॥ २२ ॥

इति कपूरस्थलनिवासिगौतमगोत्र ( शोरि ) अन्वयालंकृति दैवज्ञ-
दुनिचन्द्रात्मजपण्डितविष्णुदत्तवैदिककृतप्रश्नचण्डेश्वर-
विष्णुपदीटीकायां गमागमप्रश्नाध्यायः षष्ठः ॥ ६ ॥

---

भाषार्थ–अब ग्रहोंसे दूरादिज्ञान लिखते हैं–यदि सूर्य मंगल लग्नगत होवें तो प्रवासी बडी दूर गया है। यदि शुक्र बृहस्पति होय तो मार्गमें स्थित पथिक कहदे। चंद्र बुध लग्नमें होंय तो अतिसमीप नगरमें वा सीमान्तमें पथिकको कहै। शनि राहु लग्नगत होवें तो वहाँ ही परदेशमें स्थित पथिक कहै ॥ २२ ॥

इति श्रीकपू० नि० दै० दुनिचन्द्रात्मज ( शोरि ) पं० विष्णुदत्तवैदिककृते
प्रश्नचण्डेश्वरभाषाभावार्थे गमागमप्रश्नाध्यायः षष्ठः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ७.

तत्र मैत्री भविष्यति न वेति प्रश्ने ।

तिथिवारर्क्षयोगश्च प्रभुनामयुतस्त्रिभिः ।
युक्तः स्याद्भाजितो द्वाभ्यामिन्दौ मैत्री द्विके नहि ॥ १ ॥

विष्णुपदी–मैत्रीप्रश्ने प्रश्नकालीनतिथिवारनक्षत्रयोगः प्रभुनाम्ना स्वामिनाम्ना युतः पुनस्त्रिभिर्युक्तः कार्यः। द्वाभ्यां भाजिते पिण्डे एकशेषे मैत्री भविष्यति स्वामिना सह द्विके द्वाभ्यां शेषे नहि। भविष्यतीति ज्ञेयम् । उदाहरणम्–तिथिः

द्वितीया वारो बुधः नक्षत्रं भरणी स्वामिनाम देवदत्त एषां योगो द्वादश १२ पुनस्त्रि-भिर्युतं पंचदश, द्वाभ्यां भक्ते शेषम् एकं मैत्री भविष्यति ॥ १ ॥

भाषार्थ-तिथि वार नक्षत्र योग विष्कंभ आदि । स्वामीका नाम जोड फिर तीन और मिलाय दो अंकसे भाग देना यदि एक शेष रहे तो मित्रता स्वामीसे होवेगी । यदि दो अंक वा शून्य लब्ध होवे तो मैत्री नहीं होगी ॥ ७ ॥

युद्धप्रश्नः ।

युद्धे भाविनि चेत्प्रश्ने लग्नेशः सप्तमाधिपः ॥
शत्रू स्यातां तदा युद्धं भविष्यति न चान्यथा ॥ २ ॥

विष्णुपदी-अथ युद्धं भविष्यति न वेति प्रश्ने-लग्नेशो लग्नस्वामी, सप्तमाधिपः सप्तमेशः । यद्येतौ द्वौ मिथः शत्रू स्यातां तदा युद्धं भविष्यति । अन्यथा मित्रत्वे न युद्धं भविष्यति । शत्रू स्यातामित्युक्तेः ग्रहाणां शत्रुमित्रोदासीनत्वं प्रदर्श्यते । तद्यथा बृहज्जातके द्वितीयाध्याये-" शत्रू मंदसितौ समश्च शशिजो मित्राणि शेषा रवेस्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः । जीवेंदूष्णकरा कुजस्य सुहृदौ ज्ञोऽरिः सितार्कौ समौ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ १ ॥ सूरेः सौम्यसितावरी रविसुतौ मध्योऽपरे त्वन्यथा सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी । शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो ये प्रोक्ताः स्वत्रिकोणभादिषु पुनस्तेऽमी मया कीर्तिताः ॥ २ ॥ " २ ॥

भाषार्थ-युद्ध होगा वा नहीं इस प्रश्नमें यदि लग्नेश सप्तमेश आपसमें शत्रु होवें तो युद्ध होगा यदि मैत्री होय तो युद्ध नहीं होता है । अब शत्रु मित्र उदासीन ग्रह लिखते हैं-सूर्यके शुक्र, शनि शत्रु । बुध सम । और बृहस्पति, चंद्रमा, मंगल यह मित्र हैं १. चन्द्रमाके सूर्य, बुध मित्र हैं । और सब सम हैं । चन्द्रमाका शत्रु कोई नहीं २. मंगलके बृहस्पति, सूर्य, चन्द्रमा मित्र हैं । बुध शत्रु है । शुक्र शनि सम हैं ३. बुधके सूर्य, शुक्र मित्र हैं । चन्द्रमा शत्रु है, और सम हैं ४. बृहस्पतिके बुध, शुक्र शत्रु । शनि सम । मंगल, चन्द्रमा, सूर्य मित्र हैं ५. शुक्रके बुध, शनि मित्र । मंगल, बृहस्पति सम । और शत्रु है ६. शनैश्चरके शुक्र, बुध मित्र । बृहस्पति सम । अन्य शत्रु हैं ॥ ७ ॥ २ ॥

अथ शत्रुहननप्रश्नः ।

रिपुं हन्तुं गमिष्येऽद्य लग्ने क्रूरयुते जयः ।
लग्नेंदू शुभदृष्टौ वा जयः प्रष्टुर्न चान्यथा ॥ ३ ॥

**विष्णुपदी**–अहमद्य निभृतो रिपुं शत्रुं हंतुं मारयितुं गमिष्ये इति प्रश्ने प्रश्नलग्ने क्रूरयुते क्रूरैर्युक्ते जयो भवति इत्येको योगः। वा विकल्पार्थे। लग्नेंदू लग्नचंद्रमसौ शुभदृष्टौ शुभैर्दृष्टौ वा जयो भवति प्रष्टुः पृच्छकस्य। अन्यथा विपरीतयोगे न च जयः स्यादिति ॥ ३ ॥

**भाषार्थ**–आज हम शत्रु मारनेको जाते हैं इस प्रश्नमें यदि लग्न क्रूरयुक्त होवे तो जय होती है। अथवा लग्न चन्द्रमा शुभग्रहोंसे दृष्ट होवे तो भी जय होती है। अन्यथा नहीं होती। परंतु शत्रुका मारना युद्धभूमि [ रण ] में लिखा है अन्यथा दोष है यथा याज्ञवल्क्यस्मृतिमें लिखा है–"तवाहं वादितं क्लीबं निर्हेतिं परसङ्गतम्। न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम्" अर्थ–मैं तुम्हारा हूं ऐस जो कहै। नपुंसक होवे। अथवा शस्त्रसे रहित हो वा शरणको ले। जो भाग जाय। वा युद्धको देखे आप न लडे इनको मारना नहीं चाहिये ॥ ३ ॥

अथ दुर्गभंगप्रश्नः।

**पापैः सुखव्योमगतैः परैर्यत्प्रवेष्टितो येन नरेश्वरेण। स्वयं च न स्यादचिरेण दुर्गं मुक्तं रिपूर्णं भयविह्वलं स्यात् ॥ ४ ॥**

**विष्णुपदी**–अथ दुर्गभंगार्थमुद्यतस्य राज्ञः प्रश्नलग्नात्पापैः क्रूरग्रहैः क्षीणेन्द्वर्कमहीसुतार्कतनयसपापबुधैः सुखे चतुर्थे व्योम्नि दशमे स्थितैः परैः शत्रुभिः सह भेदं कृत्वा येन नरेश्वरेण राज्ञा प्रवेशितो दुर्गभंगार्थं स एव अचिरेण कालेन न स्यात् दुर्गस्थितैः शत्रुभिः पराजितः स्यात्। तत्समये रिपूर्णं रिपुभिः ऊर्णमाच्छादितं भयेन विह्वलं मुक्तं दुर्गं स्यात्। अशक्यो जेतुमिति भावः ॥ ४ ॥

**भाषार्थ**–पापी ग्रह प्रश्नलग्नसे चौथे दशवें स्थित होय तो राजा दुर्गभंगके लिये शत्रुओंसे मिल दुर्गभंग करनेको उद्यत होवे वही शीघ्र मारा जाता है और दुर्गभंग नहीं होता ॥ ४ ॥

**लग्ने सुतस्थे दशमे च जीवे सुखं प्रभूतं परितस्त्वरा च। निगृह्यते दुर्गमिहोपगम्य पराङ्मुखं तद्भवति क्षणेन ॥ ५ ॥**

**विष्णुपदी**–अथ लग्ने लग्नस्थे, सुतस्थे पंचमस्थे दशमे दशमस्थे जीवे बृहस्पतौ दुर्गभङ्गोद्यतस्य राज्ञः प्रभूतं बहुसुखं परितः सर्वतः। "परीति सर्वतोभावम्" इति निरुक्तम्। त्वरा शीघ्रकारिता स्यात् इह एतादृशे लग्ने दुर्गमुपगम्य शीघ्रं प्राप्य निगृह्यते तच्छत्रुः क्षणेन पराङ्मुखो भवति ॥ ५ ॥

**भाषार्थ**-यदि प्रश्नलग्न वा पंचमस्थान वा दशमस्थानमें बृहस्पति होय तो दुर्गभंगमें उद्यत जो राजा उसको सुख बहुत होता है। और शीघ्रही चारों तरफसे जायकर दुर्गको रुद्ध करलेता है और शत्रु तत्काल भाग जाता है ॥ ५ ॥

अथ संधिप्रश्नः।

**नृराशिसंस्था उदये शुभाः स्युर्व्ययायसंस्थाश्च यदा भवन्ति। यदाऽऽशु संधिं प्रवदेन्नराणां पापैर्द्विदेहोपगतैर्विरोधम् ॥ ६ ॥ संधिं कुर्यात्सुहृद्दृष्टिर्लग्नेशास्तपयोर्मिथः। पृच्छायां लग्नपे क्रूरे संधिर्जाता विनश्यति ॥ ७ ॥**

**विष्णुपदी**-नृराशिसंस्थाः पुरुषराश्यधिष्ठिताः शुभग्रहा उदये लग्ने स्युः। चात् व्यये द्वादशस्थाने आये एकादशस्था यदा शुभा भवन्ति तदा नराणामाशु शीघ्रम्। "सत्वरं चपलं तूर्णमविलम्बितमाशु च" इत्यमरः। सन्धिं प्रवदेत्। द्विदेहोपगतैर्द्विस्वभावस्थितैर्ग्रहैर्विरोधं कथयेत्। उपजातिच्छन्दस्तल्लक्षणं पूर्वमुक्तम्। लग्नेशास्तपयोर्लग्नस्वामिसप्तमेशयोर्मिथः परस्परं सुहृद्दृष्टिः सन्धिं कुर्यात्। अथ पृच्छायां प्रश्नलग्ने लग्नपे लग्नेशे क्रूरे सति जातापि संधिर्विनश्यति ॥ ६ ॥ ७ ॥

**भाषार्थ**-यदि पुरुषराशिगत शुभग्रह लग्नमें वा एकादश स्थानमें स्थित होवे तो शीघ्र संधि हो जायगी यह कहे। यदि पापी ग्रह द्विस्वभाव [ मिथुन कन्या धन मीन इन ] राशिमें होय तो विरोध होता है। अथवा लग्नेश सप्तमेशकी आपसमें मित्रदृष्टि होवै तो संधि होती है। यदि पृच्छालग्नमें लग्नेश क्रूर ( पापी ) हो तो भई हुई संधि नाशको प्राप्त होती है ॥ ६ ॥ ७ ॥

अथ विवाहप्रश्नः।

**कर्कतौलीवृषाश्चन्द्रयुक्ताः शुभनिरीक्षिताः। पृच्छाकाले तदा नृणां कन्यालाभो भवेद्ध्रुवम् ॥ ८ ॥ योषिद्ग्रहस्थिताः शेषाः पश्यन्ति स्त्रीनवांशकम्। लग्ने च स्यात्तदा लाभः स्त्रियाः पुंसोऽपि तादृशः ॥ ९ ॥**

**विष्णुपदी**-पृच्छाकाले प्रश्नलग्ने कर्कः कुलीरस्तौली तुला वृषो वृषराशिः एष्वन्यतमं प्रश्नलग्नं चन्द्रयुक्तं शुभग्रहैर्निरीक्षितं तदा नृणां। 'नृ च' इत्यनेन नामि व दीर्घः। पुरुषाणां कन्यायाः ध्रुवं निश्चयेन लाभः स्यात्। योषिद्ग्रहौ शशिशुक्रौ शेषराशिषु स्थितौ स्त्रीनवांशं पश्यतश्चेत् लग्ने स्यातां तदा पुंसः पुरुषस्यापि तादृश्या ग्रहस्वरूपवत्याः स्त्रिया लाभः स्यात्। ग्रहाणां स्त्रीपुरुषनपुंसकत्वमुच्यते। उक्तं च बृह-

ज्जातके-"बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः ।" अर्थात् बुधशनी नपुंसकौ, चन्द्रभृगू स्त्रियौ, शेषाः सूर्यमंगलगुरवः पुमांसः । अथ कथमुच्यते शशिशक्रौ युवतीति । चन्द्रमसा रोहिण्यां स्वभार्यायां बुधो जातः । अत एव "रौहिणेयो बुधः सौम्यः" इत्यमरेणोक्तम् । रोहिणी चन्द्र मत्तो भार्या प्रसिद्धैव । यथा कादम्बर्याम्-"निक्षिप्य राज्यभारं सख्यौ रेमे सह प्रियया । राजप्रीत्याऽवन्त्यां चांद्रे लोके च रोहिणीप्रीत्या ॥" इति । भृगोरपि भृगुपत्नी महाभारतादौ प्रसिद्धैव। यदुक्तम्-"बुधसूर्यसुतौ नपुंसकाख्यौ" तदपि न समीचीनम् । यतो बुधेन हरपार्वतीशापदोषात्प्राप्तस्त्रीशरीरे सुद्युम्नाख्ये राज्ञि क्षत्रियवंश उदपादि, कथं स नपुंसक इति । एषा कथा वाल्मीकीयरामायण उत्तरकाण्डे प्रपंचिता । एवं शनैश्चरेऽप्यूह्यम् । अत्रोच्यते । यद्यपि चंद्रमसादीनां पुरुषत्वं वेदशास्त्रेषु प्रसिद्धं तथापि "खगस्वरूपात्फलमूहनीयम्" इत्युक्तफलनिरूपणार्थमेव चंद्रादीनां स्त्रीपुंनपुंसकस्वरूपं विधीयते अन्यथा स्त्रीलाभप्रश्नं कस्मात् ग्रहात् स्त्रीशीलं लाभस्वरूपादिकमुच्यते । एवं च स्त्रीपुंनपुंसकादीनां ज्ञानं कथं केन कथ्यते अत एव सर्वफलज्ञानाय बुधादीनां नपुंसकता प्रतिपादिता । एवमेव ग्रहेभ्यः पक्षिपशुवृक्षादीनां फलमुक्तं बृहज्जातके-"खगे दृकाणे बलसंयुतेन वा ग्रहेण युक्ते चरभांशकोदये । बुधांशके वा विहगाः स्थलाम्बुजाः शनैश्चरेन्द्वीक्षणयोगसंभवाः ॥ अंतःसाराञ्जनयति रविर्दुर्भगान्सूर्यसूनुः क्षीरोपेतांस्तुहिनकिरणः कंटकाढ्यांश्च भौमः । वागीशज्ञौ सफलविफलान्पुष्पवृक्षांश्च शुक्रः स्निग्धानिन्दुः कटुकविटपान्भूमिपुत्रश्च भूयः ॥" इति । "क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः क्लीबे चतुष्टयगते तदवेक्षणाद्वा । चन्द्रोपगद्विरस ( १२ ) भागसमानरूपं सत्त्व वदेद्यदि भवेत्स वियोनिसंज्ञः ॥" इत्यादि । सर्वग्रहेभ्य एव नष्टवस्तुधातुमूलजीवलाभालाभस्त्रीपूरषसुखदुःखचौरज्ञानवर्षमुहूर्तफलादिकमुच्यते । अतो याज्ञवल्क्येनाप्युक्तम्"ग्रहाधीना नरेंद्रेणामुच्छ्रयाः पतनानि च । भावाभावौ च जगतस्तमात्पूज्यतमा ग्रहाः ॥" इति ॥ ८-९ ॥

भाषार्थ-यदि प्रश्नलग्नमें कर्क, तुला, वृश्चिक, वृष राशि हो उसमें चन्द्रमा युक्त होय तो पुरुषको कन्यालाभ होता है । शेष राशिमें स्त्रीग्रह स्थित होय स्त्री नवांशकोही देखे अथवा लग्नमें होवें तोभी पुरुषको स्त्रीलाभ होता है । इसी प्रकार स्त्रीको पुरुष लाभ होता है ॥ ८-९ ॥

अथ गर्भप्रश्नः ।

**कान्ताभिधानं गुणितं मुनीन्द्रैस्तिथ्या युतं नागहृतं च शेषम् । समे च कन्या विषमे च पुत्रो निः शेषभागं मरणाय नूनम् ॥ १० ॥**

विष्णुपदी–अथ गर्भे किं वर्तत इति प्रश्ने कान्ताभिधान कान्ताया द्वितीयाया अभिधानम् आख्या । "आख्याह्वे अभिधानं च" इत्यमरः । मुनीन्द्रैः सप्तभिरंकैर्गुणितं तिथ्या तत्कालीनया युतं युक्तं नागैर्वसुभिरष्टभिर्हृतं भक्तं यच्छेषमंकं तस्मात्फलं ज्ञेयम् । अथवा कान्ताभिधान प्रश्नलग्नात्सप्तमस्थानमंकं सप्तभिर्गुणितं प्रश्नकालिकतिथ्या युक्तं पुनरष्टभिर्भागो दातव्यः शेषमंकात्फलं ज्ञातव्यम् । अथ समे युग्मे द्विचतुर्थषष्ठरूपे लब्धे कन्या वाच्या । विषमेऽङ्के लब्धे एकत्रिपञ्चसप्तरूपे पुत्रो वाच्यः । अथ कन्यापुत्रनिरुक्तिः–"कन्या कमनीया भवति क्वेयं नेतव्येति वा कमनेनानीयत इति वा कनतेर्वा स्यात् कांतिकर्मणः" इति । "पुत्रः पुरु त्रायते निरयाद्वा पुंनरकं ततस्त्रायत इति वा" इति निरुक्तम् । निःशेषभागं शून्ये लब्धे गर्भो विपद्यत इति वाच्यम् । नूनमिति निश्चयार्थेऽव्ययम् ॥ १० ॥

भाषार्थ–स्त्रीका नाम वा प्रश्नलग्नसे सप्तमस्थान सातसे गुण उस कालकी तिथि मिलाय आठसे भाग देवे । यदि सम अंक २ । ४ । ६ यह मिलें तो कन्या गर्भमें है यह कहै । यदि विषम अङ्क १ । ३ । ५ मिलें तो पुत्र कहै । यदि शून्य ० मिले तो गर्भस्राव होता है वा पात होजाता है ॥ १० ॥

**तिथिवारं च नक्षत्रं गर्भिणीनामसंयुतम् । सप्तभिश्च हरेद्भागं शेषं च फलमादिशेत् ॥ ११ ॥ रविगुरुमंगलसौरे पुत्रः शुक्रज्ञसोमेषु वदेच्च कन्याम् । विज्ञाय चांकं प्रवदेत्सुनिश्चितं स नोपहास्यं व्रजतीह लोके ॥ १२ ॥**

विष्णुपदी–तात्कालिकतिथिं वारं दिवसं नक्षत्रं गर्भिणीनामाक्षरेण संयुतं कार्यं पुनः सप्तभिरङ्कैर्भागो दातव्यः शेषमङ्कात्फलमादिशेत् फलं तु पूर्वोक्तमेव । अथवा रविः सूर्यो गुरुर्बृहस्पतिर्मंगलो भूमिपुत्रः सौरिः शनैश्वरः एषु लग्नस्थितेषु सत्सु पुत्रो वाच्यः । शुक्रो भृगुः, ज्ञो बुधः, सोमो भृगलाञ्छन एषु लग्नगतेषु सत्सु कन्या वाच्या । अङ्कराशिं सम्यग्विज्ञाय पुनर्वक्तव्यं तदा स इह लोके नोपहास्यं याति अन्यथा यात्येव । बृहज्जातकेऽपि पुत्रकन्याज्ञानार्थं प्रश्नोऽन्यप्रकारेणोक्तस्तद्यथा–"ओजस्थैः पुरुषाशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः पुञ्जन्म प्रवदेत्समांशकगतैर्युग्मेषु तैर्योषितः ।

गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियं द्व्यंगस्था बुधवीक्षणाच्च यमलौ कुर्वन्ति पक्षे स्वके ॥ १ ॥ विहाय लग्नं विषमर्क्षसंस्थः सौरोऽपि पुञ्जन्मकरो विलग्नात् । प्रोक्तग्रहाणामवलोक्य वीर्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥ २ ॥" षट्पञ्चाशिकायां तु-"विषमस्थितेऽर्कपुत्रे सुतस्य जन्मान्यथांगनायाश्च । लग्ना वरस्य नारी समस्थितेऽतोऽन्यथा वामम् ॥ १ ॥ पुंवर्गे लग्नगते पुंग्रहदृष्टे बलान्विते पुरुषः । युग्मे स्त्रीग्रहदृष्टे स्त्रीबुधयुक्ते तु गर्भयुता ॥ २ ॥" इति ॥ ११ ॥ १२ ॥

भाषार्थ-तिथि वार नक्षत्र गर्भिणी स्त्रीके नामके अक्षर इकट्ठे कर सातसे भाग देवे और विषम अंक मिलें तो पुत्र । और सम अंक शेष बचें तो कन्या कहै । अथवा सूर्य बृहस्पति मंगल शनैश्चर यदि यह प्रश्नलग्नमें होंय तो पुत्र, यदि शुक्र चन्द्रमा बुध होंय तो कन्या कहै । परंतु अंकप्रश्न और योगप्रश्नको भली प्रकार सोचकर कहै तो इस लोकमें वह पुरुष उपहास्यको नहीं प्राप्त होता है बल्कि बडा प्रतिष्ठित होताहै । इसलिये अन्य प्रश्न रामबाण बृहज्जातकके कहते हैं कि, यदि लग्न सूर्य बृहस्पति चन्द्रमा ओज [ विषम ] राशिमें होंय और पुरुषराशि मेष आदिके नवांशमें होय बलयुक्त होवे तो पुत्रजन्म निश्चयसे कहै १, यदि लग्न चन्द्र सूर्य बृहस्पति सम राशि वृष आदिमें होंय तो और स्त्रीराशिके नवांशमें बलयुक्त होवें तो अवश्य कन्या जन्म कह देवे २, यदि सूर्य, बृहस्पति विषम राशिमें होय तो पुत्र होगा यह कहै ३, यदि शुक्र, चन्द्रमा, मंगल समराशिमें वा नवांशमें होय तो कन्याजन्म कहै ४, यदि पूर्वोक्त ग्रह द्विस्वभावराशिमें होवें और बुध पूर्णदृष्टिसे देखे तो यमल अर्थात् [ जोडे ] होते हैं । यमल कन्या वा पुत्र होंगे इस शंकामें लिखते हैं, चारही राशि द्विस्वभाव हैं जैसे मिथुन, कन्या, धन मीन इनमें जो मिथुन धन यह पुरुषांशक नमी है और कन्या मीन स्त्री अंशमें बली है यदि मिथुन और धनराशिनवांशमें सूर्य बृहस्पति होवे और बुध जहां तहां पडा हुआ पूर्णदृष्टिसे देखे तो यमल [ जोडे ] दोनों लडकेही होते हैं । यदि कन्या मीन राशि नवांशमें [ शशी ] चन्द्रमा, शुक्र, मंगल होवें और बुध पूर्णदृष्टिसे पूर्ववत् देखे तो [ यमल ] दोनों कन्याही होती हैं । अथवा यदि द्विस्वभाव राशिके नवांशमें सूर्य, बृहस्पति, चन्द्र, शुक्र, मंगल मिश्रित मिलकर स्थित होवें और बुधकी पूर्ण दृष्टि हो तो यमलोंमें एक पुरुष दूसरी कन्या होती है । प्रथम कन्या वा पुरुष इस शंकामें यदि पुरुषग्रह बलयुक्त हो तो प्रथम पुरुष, यदि स्त्रीग्रह बली होय तो

प्रथम स्त्री। इसी प्रकार ज्येष्ठ कनिष्ठता गुरुद्वारा समझनी चाहिये। यह शास्त्र अधिकारीकोही फल देता है, जो गुरुजीकी सेवामें मन वाणी शरीरसे तत्पर हो। और जो अधिकारी नहीं वा पढकर गुरुजीको मानते नहीं उनको यह फलीभूत नहीं होता इसमें वेद स्वयं प्रमाण है "अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥" और भी योग पुत्रका लिखते हैं-कि, यदि लग्नको छोड विषमराशिमें शनैश्चर होय तो वह केवलही पुत्रजन्म करता है इस प्रकार प्रोक्त ग्रहोंका बल देख प्रसूतिमें पुरुष वा स्त्री कहै और षट्पंचाशिकाकार यही लिखते हैं कि, यदि विषमराशिमें शनैश्चर स्थित होय तो पुरुषजन्म कहना, अन्यथा स्त्रीजन्म कहना। इसी प्रकार यदि समराशिगत शनि होय तो पुरुषको स्त्रीलाभ कहै।यदि विषमराशिगत होय तो स्त्रीकोपुरुष लाभ कहै। यह सामान्य विषमराशि कहते हैं, वराहजी लग्नको छोड अन्य विषमराशि कहते हैं इतना भेद प्रश्नजातकका है। अथवा पुरुषराशि प्रश्नगत हो और पुरुषग्रह बली होय देखे तो पुरुष कहै। यदि समराशि लग्नगत हो और स्त्रीग्रह देखे तो कन्या कहे, बुधयुक्त होय तो गर्भयुक्त स्त्री कहै। षट्पंचाशिकाकारका वराहजीसे कुछ भेद नहीं वही पूर्वोक्त संक्षिप्तसे कहा है यह पिता पुत्र हैं ॥ ११ ॥ १२ ॥

लग्नस्य विगतैरंशैर्गता मासा निरूपिताः। भोग्यांशैर्भोग्यमासाश्च गर्भस्य सुप्रकल्प्यताम् ॥ १३ ॥ समे लग्ने समांशे च शनिः कन्याप्रदो भवेत्। विषमे विषमांशे च लग्ने पुत्रप्रदो भवेत् ॥ १४ ॥ ओजभांशे जीवसूर्यौ पुत्रलाभकरौ मतौ। समभांशे च यद्येते शुक्रचंद्रधरासुताः। कन्यकाकारका ज्ञेयाः प्रश्नलग्नान्मनीषिभिः ॥ १५ ॥

विष्णुपदी-अथ गर्भस्थस्य गतशेषमासा निरूप्यन्ते-लग्नस्येति। लग्नस्य प्रश्नकालिकस्य विगतैर्भुक्तैरंशैर्गतमासाः कथिताः। एतदुक्तं भवति-प्रश्नलग्नस्य यावदंशा भुक्तास्तावत्प्रमाणा भुक्तमासा गर्भस्थस्य वाच्याः। एवं भोग्यांशैरग्रे भुज्यमानांशैः भोग्यमासा निरूपणीयाः। अंशशब्देनात्र दशमांशः संबध्यते अन्यथा दोषापत्तिर्गर्भस्य दशमास्यत्वात्। उक्तं च यजुर्वेदे-" एजतु दशमास्यो गर्भो अस्त्रज्जरायुणा सह " इति। अथोक्तमुपसंहरति समे लग्ने इति। समे लग्ने वृषादौ समांशे समराशिगतनवमांशे लग्ने वा शनिः शनैश्चरः कन्याप्रदो भवति। विषमे लग्ने विषमांशे विषमराश्यंशे शनिः पुत्रदः पुत्रकारको भवति। " आतश्चोपसर्गे " इत्यनेन कः

प्रत्ययः। अन्यच्च ओजभांशे विषमराशिनवांशे जीवसूर्यौ स्यातां तदा पुत्रलाभकारकौ मतौ वराहपृथुयशआदिभिः सर्वाचार्यैरिति भावः। यद्येते समराशिनवमांशे शुक्रचन्द्रभौमास्तदा कन्याप्रदा वाच्याः॥ १३॥ १४॥ १५॥

भाषार्थ–प्रश्नलग्नके गत अंशोंसे शेष मास कहै। परंतु यहां दशमांशसे मनोरथ है। यदि समराशि वा समनवमांशमें शनि हो तो कन्या वा विषमराशि नवमांशमें शनि पुत्रकारक होता है। यदि ओज राशि वा नवांशमें सूर्य बृहस्पति होंय तो पुत्र होता है। यदि समराशि वा नवमांशमें शुक्र चंद्र भौम होंय तो कन्या। ऐसेही बृहस्पति षट्पंचाशिकामें लिखा है॥ १३॥ १४॥ १५॥

अथ वार्ता मिथ्या सत्या वेति प्रश्ने।

वारर्क्षयोगजे योगे तिथिघ्ने वेदभाजिते।
सत्यमेकेन च द्वाभ्यां तथा सत्यं त्रिभिः पुनः॥ १६॥

विष्णुपदी–वारो दिवसः, नक्षत्रमश्विन्यादि, योगो विष्कंभादय एषां तिथिघ्ने तात्कालीनतिथ्या निघ्ने गुणिते वेदैश्चतुर्भिर्भाजिते सति लब्धैकांके वार्ता सत्या द्वाभ्यां न त्रिभिः पुनः सत्या वार्ता ज्ञातव्या॥ १६॥

भाषार्थ–प्रश्नकालका वार, नक्षत्र, योग इकठे कर उस दिनकी तिथिसे गुणना, फिर चारसे भाग लेना यदि एक वा तीन अंक मिलें तो वार्ता सत्य कहै। यदि दो अंक मिलें तो वार्ता असत्य कहै॥ १६॥

अथ वृष्टिप्रश्ने।

वृष्टिं करोत्यवृष्टौ वृष्ट्यां वृष्टिं निवारयति। पश्चात्सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे॥ १७॥ चापो मघोनः कुरुते निशायामाखण्डलायांदिशि भूपपीडाम्॥ १८॥

विष्णुपदी–अथेन्द्रचापतो वृष्टिमाह–कुलिशं वज्रं बिभर्तीति कुलिशभृत् इंद्रस्तस्य चापं समुदितमवृष्टौ वृष्टिरहितकाले वृष्टिं वर्षणं करोति। सत्यां वृष्ट्यां समुदितं शक्रधनुर्वृष्टिं निवारयति। वृष्टेर्वर्षायाः पश्चादुदितमिन्द्रायुधं सदैव प्रतिदिनं वृष्टिं करोति। कुलिश इति वज्रनाम। "वज्रं वर्जयतीति सतः" इति निरुक्तम्। "कुलिशं भिदुरं पविः" "वृष्टिर्वर्षम्" "इन्द्रायुधं शक्रधनुः" एष्वमरः। मघोनः इंद्रस्य चापो धनुर्यदि रात्रौ दृश्यते तदा आखण्डलायां दिशि पूर्वस्यां दिशिभूपपीडां करोति। "इंद्रो मरुत्वान्मघवा बिडौजाः पाकशासनः" इत्यमरः। मघोन इत्यत्र वस्योत्वे षष्ठ्ये-

कवचने रूपम् । षट्पचाशिकायामन्यदुक्तं तद्यथा-"चन्द्रार्कयोः सप्तमगौ सिताकौं सुखेष्टमे वापि तथा विलग्नात् । द्वितीयदुश्चिक्यगतौ तथा च वर्षासु वृष्टिं प्रवदेन्नराणाम् ॥ १ ॥ सौम्या जलराशिस्थास्तृतीयधनकेन्द्रगाः सिते पक्षे । चन्द्रे वाप्युदयगते जलराशिस्थे वदेद्वर्षम् ॥ २ ॥" इति ॥ १७-१८ ॥

भाषार्थ-इन्द्रधनुषसे वर्षाका फल कहते हैं-यदि इन्द्रका धनुष वृष्टिके विना उदय होय तो वृष्टि करता है । यदि वृष्टिमें उदय होय तो वर्षाको निवृत्त करता ह । यहि वर्षा होनेके अनन्तर इंद्रधनुष उदय होय तो प्रतिदिन वर्षा होती है । यदि इंद्रधनुष रात्रिको उदय होय तो पूर्वकी दिशामें राजाओंको पीडा देता है । षट्पंचाशिकाकार प्रश्नसे वर्षाकालमें वृष्टि कहते हैं जैसे चन्द्रमा सूर्य इनसे सप्तम स्थानमें शुक्र, शनि यथासंभव होंय । अथवाप्रश्नलग्नसे चौथे और अष्टम स्थानमें वही शुक्रशनि होंय । अथवा इसी प्रकार दुश्चिक्य ( तृतीय ) स्थानमें होंय उनसे मनुष्योंसे वर्षाऋतुमें वृष्टि कहै । अब प्रश्नसे वृष्टिज्ञान लिखते हैं-कर्क, मीन, मकर, कुंभ यह चार जलराशि हैं इनसें शुभग्रह स्थित होंय, सित ( शुक्लपक्ष ), अर्द्धमास पर्यंत यदि द्वितीय, तृतीय, केन्द्र ( प्रथम, चतुर्थ, सप्तम इन ) में यथासंभव प्राप्त होवे । अथवा चन्द्रमा जलराशिगत होय या प्रश्नलग्नमें पडे तोभी वर्षाकालमें वृष्टि कहै ॥ १७-१८ ॥

अथ परिवेषफलम् ।

**रविशशिपरिवेषे पूर्वयामे च पीडा रविशशिवरिवेषे वातवृष्टिर्द्वितीये ।**
**रविशशिपरिवेषे धान्यनाशस्तृतीये रविशशिपरिवेषे भूमिकंपश्चतुर्थे १९॥**

विष्णुपदी-अथ सूर्याचन्द्रमसोः परिवेषफलमाह-रविशशिपरिवेषे परिधौ पूर्वयामे प्रथमप्रहरे सति पीडा वाच्या । द्वितीययामे यदि परिवेषो भवेत्तदा वातेन सहिता वृष्टिर्भविष्यतीति वाच्यम् । तृतीययामे चन्द्रसूर्यपरिवेषे धान्यानां व्रीह्यादीनां नाशः । चतुर्थप्रहरे सूर्यचन्द्रपरिवेषे तदा भूमिकम्पो जायते । "परिवेषस्तु परिधिरुपसूर्यकमण्डले" इत्यमरः । अथ विद्युत्फलं प्रसङ्गतः प्राप्तं निरूप्यते । तद्यथा-"वाताय कपिला विद्युदातपायातिलोहिनी । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥" इति विद्युत्फलम् ॥ १९ ॥

भाषार्थ-परिवेषका काल लिखते हैं-यदि प्रथम प्रहरमें परिवेष होय तो लोकोंको पीडा होती है । यदि दूसरे प्रहरमें परिवेष होय तो वायु और वृष्टि होती

है। यदि तीसरे प्रहरमें परिवेष होय तो धान्य [ अन्न ] का नाश होता है। यदि चतुर्थ प्रहरमें परिवेष होय तो भूकंप होता है । इस प्रकार यदि विद्युत (बिजली ) कपिलवर्णकी हो तो वायु आती है। यदि रक्तवर्ण हो तो धूप पडती है। यदि पीतवर्ण विद्युत्का होय तो वर्षा होगी। यदि श्वेतरंग विद्युत्का होय तो दुर्भिक्ष होता है ॥ १९ ॥

अथ रविमध्यम् ।

बुधशुक्रौ समीपस्थौ सजलां कुरुतो महीम् ।
तयोरंतर्गतो भानुः समुद्रमपि शोषयेत् ॥ २० ॥

विष्णुपदी—बुधश्च शुक्रश्च तौ भृगुरौहिणेयौ सूर्यस्य समीपस्थौ निकटवर्तिनौ महीं पृथिवीं । 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । "पृथुरप्रथिता प्रथनात्पृथिवीत्याहुः" इति निरुक्तम् । सजलां जलेन सहितां जलपूर्णां कुरुतः । "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । पयः कीलालममृतं जीवनं भुवनं वनम् ॥ अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् । मेघपुष्पं घनरसं त्रिषु द्वे आप्यमम्मयम् ॥" इत्यमरः । तयोर्बुधशुक्रयोरंतर्गतो मध्यस्थितो भानुः सूर्यः । "भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इत्यमरः । समुद्रमपि शोषयेत् शुष्कं कुर्यात् । अवग्रहो भवति । "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । उदन्वानुदधिः सिंधुः सरस्वान्सागरोऽर्णवः । रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ॥ " इत्यमरः । अथ समुद्रः कस्मात्समुद्रवन्त्यस्मादापः समभिद्रवंत्येनमापः संमोदन्तेऽस्मिन्भूतानि " इति निरुक्तम् ॥ २० ॥

भाषार्थ—यदि बुध और शुक्र सूर्यके समीप राश्यन्तर्गत हों तो जलसे पूर्ण पृथ्वी करते हैं अर्थात् वृष्टि बहुत होती है। यदि बुध और शुक्रके मध्यमें भानु ( सूर्य ) हो जाय तो समुद्रके शुष्क करनेमें समर्थ होता है अर्थात् अवग्रह ( वृष्टि नहीं ) होता है ॥ २० ॥

अनुसरति यदा कुजः पतङ्गं घटमिव भिन्नतनुर्जलं ददाति । यदि
भवति दिवाकराच्च पूर्वं प्रलयघटानपि शोषितुं समर्थः ॥ २१ ॥

विष्णुपदी— यदा यस्मिन्काले कुजो महीजः पतङ्गं सूर्यमनुसरति अनुसरणं पश्चात्करोति तदा काले घटमिव जलपूर्णकलशमिव भिन्नतनुर्भिद्यमानशरीरः जलं ददाति अथवा भिन्नतनू इति पक्षे भिन्नमेकदेशावर्तिनं तनु सूक्ष्ममल्पं जलं ददाति कचि-

त्कचिद्वृष्टिरिति भावः । यदि दिवा करोतीति दिवाकरः । 'दिवाविभा०' इत्यनेन टः प्रत्ययः । सूर्यस्तस्मात्पूर्वम् अग्रे मङ्गलःस्यात् तदा प्रलयघटान् प्रलयकालीनघटान् मेघान् पुष्करावर्तकादीनपि निश्चयेन शोषितुं शोषयितुं समर्थः । "मेघः कस्मान्मेहतीति सतः" इति निरुक्तम् । वृष्टेरवघातो भवतीत्यर्थः ॥ २१ ॥

**भाषार्थ**–यदि सूर्यके पीछेसे मंगल अनुसरण करे तो घटवत् थोडा२ जल किसी स्थानमें देता है अर्थात् अल्प वृष्टि होती है । यदि सूर्यके आगे मंगल होय तो प्रलयकालके मेघोंको भी शोषण करनेको समर्थ होता है अर्थात् उतने चिरकालतक वृष्टि नहीं होती है ॥ २१ ॥

**द्वौ ग्रहौ नृपसंक्षोभ त्रयो घ्नंति नराधिपम् ।**
**चत्वारो राज्यनाशाय पंच घ्नंति जगत्त्रयम् ॥ २२ ॥**

**विष्णुपदी**–अथैकराशिस्थग्रहाणां फलम्–यदि शत्रुगृहे द्वौ ग्रहावेकराशिस्थौ तदा नृपाणां राज्ञां संक्षोभं सम्यक् क्षोभं जनयतः । त्रयो ग्रहाः नराधिपं राजानं घ्नन्ति विनाशयन्ति । चत्वारो ग्रहा राज्यनाशाय देशभंगाय । पंचग्रहाः त्रयाणां जगतां समाहारो जगत्त्रयं । "स नपुंसकम्" इत्यनेन नपुंसकत्वमेकवद्भावश्च । विधीयते त्रिभुवनं घ्नन्ति नाशयन्ति ॥ २२ ॥

**भाषार्थ**–यदि शत्रुग्रह एक राशिमें दो होंय तो राजाओंको क्षोभ होता है । यदि तीन ग्रह इकट्ठे पडे होंय तो न्यून राजाओंका नाश करते हैं । चार होंय तो राज्यका नाश करते हैं । पांच शत्रुग्रह होवें तो त्रिभुवनको नाश करते है ॥ २२ ॥

**पौषे पंचशनिर्विद्यान्माघे पञ्चरविस्तथा ।**
**फाल्गुने पञ्च भौमाश्च महीनाशाय केवलम् ॥ २३ ॥**

**विष्णुपदी**–अथैकसंक्रान्तौ शन्यादीनां फलमाह–पौषे मासे यदि पञ्च शनैश्चरा स्युः । माघे मासे पञ्च रवयः पञ्च सूर्याः, फाल्गुने मासि पञ्च भौमा यदि स्युस्तदा महीनाशाय भवति । एतदुक्तं भवति–यदि पौषे पञ्च शनयो, माघे पंच सूर्याः, फाल्गुने पंच भौमवाराः स्युस्तदा पृथिव्युपरि महान्दुर्भिक्षाद्युपप्लवो नाशश्च स्यात् २३

**भाषार्थ**–यदि पौष माघमें पांच शनैश्चर वार होजाँय और माघमासमें पांचही रविवार होंय और फाल्गुन महीनेमें पांच मंगलवार होंय तो पृथ्वीके नाशके लिये होते हैं अर्थात् दुर्भिक्ष आदिका बडा उपद्रव होता है ॥ २३ ॥

**गुरोर्गेहे यदा मन्दो मन्दगेहे यदा गुरुः ।**
**तदा गुरुभयं लोके जगाद बादरायणः ॥ २४ ॥**

विष्णुपदी-गुरोर्बृहस्पतेर्गेहे गृहे। 'गृहं गेहोदवसितं वेश्मसद्मनिकेतनम्' इत्यमरः। यदा यस्मिन्काले गुरुगृहे मन्दः शनैश्वरः स्याच्छनिगृहे यदा गुरुर्बृहस्पतिः स्यात्तदा लोके गुरु महद्भयं भवति इति बादरायणो महर्षिर्व्यासो जगाद। एतदुक्त भवति-धनुर्मीनराशौ शनिः स्यात्, मकरकुंभराशौ गुरुः स्यात्तदा लोकानां महद्भयं दुर्भिक्षादितो जायते ॥ २४ ॥

भाषार्थ-यदि बृहस्पतिकी राशि धनु और मीनमें शनैश्वर होय और शनिकी राशि मकरकुंभमें बृहस्पति होय तो लोकोंको दुर्भिक्ष आदिसे बड़ा भय होताहै २४

**मीनमेषवृषकन्यकातुलावृश्चिकेषु रवयो यदा तदा। यांति भूमिपतयो यमालयं क्षुद्भयाच्च परिपीडिता जनाः ॥ २५ ॥**

विष्णुपदी-मीनमेषवृषकन्यकातुलावृश्चिकेषु अर्थात् चैत्रवैशाखज्येष्ठाश्विनकार्तिकमार्गमासेषु यदि रवयः पंचसख्याऽवच्छिन्नाः सूर्यवाराः स्युस्तदा तस्मिन्वर्षे भूमिपतयो राजानो यमालयं यमस्य धर्मराजस्य आलयं गृहं यांति मृत्युं प्राप्नुवंतीत्यर्थः। जना लोकाः क्षुद्भयात् परिपीडिता इतस्ततोऽनाथाः सन्तो विचरन्ति। "धर्मराजः पितृपतिः समवर्ती परेतराट्। कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥" इत्यमरः ॥ २५ ॥

भाषार्थ-यदि मीन, मेष, वृष, कन्या, तुला, वृश्चिककी संक्रांतिकी अर्थात् चैत्र, वैशाख ज्येष्ठ, आश्विन, कार्तिक, मार्गशीर्ष इन मासोंमें पांच रविवार होंय तो राजोंको उपद्रव होता है और काल पडता है। क्षुधासे पीडित प्रज लोक अनाथ यहां तहां फिरते हैं ॥ २५ ॥

**राहुर्मन्दो महीजो रविशशिभृगुभिर्वाक्पतिश्चन्द्रपुत्रो यद्येते चैकराशौ ग्रहगणसहिता यस्यकस्यापि काले। हाहाभूतं समस्तं पुरनगरलयं छत्रभङ्गं नृपाणां प्रालेयं भूमिकंपं मनुजहतिकरं सर्वसंहारकारि ॥ २६ ॥**

विष्णुपदी-यद्येकस्मिन्नेव राशौ राहुः सिंहिकापुत्रो, मंदः शनिर्महीजो भौमः, रविः सूर्यः, शशी चन्द्रमाः, भृगुः शुक्रो, वाक्पतिबृहस्पतिश्चन्द्रपुत्रो बुधः। ग्रहनक्षत्राणां वा उपग्रहाणां गणेन सहिता यस्य कस्यापि काले यस्मिन्कस्मिन्नपि काले एकराशिगताः स्युस्तदा हाहाशब्देन भूतं व्याप्तं पुरनगराणां लयं क्षयं तथा नृपाणां राज्ञां छत्रभङ्ग राज्यभङ्गं स्यात्। प्रालेयं हिमपतनं। "प्रालेयं मिहिका

ष" इत्यमरः । भूमिकम्पो भूकम्पः प्रत्यहं स्यात् । तथा मनुजानां पुरुषाणां हतिकरं नाशकारकं तथा च सर्वस्य वस्तुनश्चराचरात्मकस्य संहारकारि नाशकारि भवतीत्यर्थः । अत्र स्रग्धरानामच्छंदः ॥ २६ ॥

**भाषार्थ**-यदि राहु, शनि, मंगल, सूर्य, चन्द्रमा, शुक्र, बृहस्पति, बुध यह ग्रह-गण नक्षत्रों और उपग्रहोंके साथ एक राशिगत होंय तो सम्पूर्ण पृथिवीमें हाहाकार पडता है पुर, नगर ( गाम ) नष्ट होते हैं राजोंका छत्रभंग होता है और हिमपात होता है, भूकम्प होता है, मनुष्योंका नाश होता है, तथा सर्व चर अचर प्राणि-मात्र नष्ट होते हैं ॥ २६ ॥

**सवीर्यौ कुजज्ञौ नृपाखेटसिद्धिर्यदा वीर्यहीनाविमौ नो तदाप्तिः ।**
**जलाखेटमाहुः सवीर्यैर्ग्रहर्क्षैर्जलाख्ये न योगे नगाखेटमाहुः ॥ २७ ॥**

**विष्णुपदी**-अथ मृगया प्रश्नलग्नतो निरूप्यते-यदा कुजज्ञौ बुधभौमौ बलयुक्तौ प्रश्नकाले स्यातां तदा नृपस्य राज्ञ आखेटसिद्धिः मृगयाप्राप्तिः स्यात् । वीर्यहीनौ बलहीनौ इमौ कुजज्ञौ तदा मृगयालाभो न संपद्यते । सवीर्यैर्बलयुक्तैर्जलराशिगतै ग्रहैस्तदा जलगतमत्स्यादीनामाखेटमाहुः । यदि जलाख्यो योगो न तदा नगात्पर्वतात् वनद्वाऽऽखेटं ब्रूयाद्राशिवशात् । स्वकृतजातकरत्ने उक्तं च मत्तातपादैः-"कर्ककुम्भ-झषतुलवृश्चिकाः सजलाः स्मृताः । शेषाः शुष्कास्तु विज्ञेया मृगोऽन्त्यार्धो जले-चरः ॥ " इति। श्रीनीलकण्ठैस्त्विदमुच्यते-'सवीर्यौ कुजज्ञौ नृपाऽऽखेटसिद्ध्यै न सिद्धिर्यदा वीर्यहीनाविमौ स्तः । जलाऽऽखेटमाहुः सवीर्यैर्जलर्क्षैर्जलाख्यैर्नगाख्यैर्नगाखे-टमाहुः ॥ लग्नास्तनाथौ केन्द्रस्थौ निर्बलौ क्लेशदायिनौ । मृगयोक्ता शुभफला वीर्याढ्यौ यदि तौ पुनः ॥ " यदि लग्नेशसप्तमेशौ केन्द्रस्थौ बलयुक्तौ तदाऽऽखेट-लाभोऽन्यथा न लाभः । अत्र वंशस्था नाम च्छंदः तल्लक्षणम्-" वंशस्था ज्तौ ज्रौ" ' जतौ तु वंशस्थमुदीरितं जरौ " इति ॥ २७ ॥

**भाषार्थ**-यदि बलयुक्त मंगल बुध होवें तो राजाको आखेट ( शिकार ) की सिद्धि होती है । यदि निर्बल होय तो ( आखेट ) शिकार की सिद्धि नहीं होती । यदि जलराशि वीर्ययुक्त होय तो जलसे आखेट मिलती है । यदि पर्वतचारी राशि बली होय तो पर्वतसे मृगयाकी सिद्धि होती है । इसी प्रकार वन, ग्राम आदि पूर्वोक्त राशि ग्रहोंसे जानना चाहिये । अथ यदि लग्नेश सप्तमेश केन्द्रमें होकर निर्बल होंय तो आखेटमें क्लेश देते हैं । यदि वही केन्द्रस्थ होकर बलयुक्त होंय तो शीघ्र मृगया मिलती है ॥ २७ ॥

अथ भोजनचिंता।

लग्नेशोऽन्नप्रदो ज्ञेयः सुखेशो भोज्यमीरितम्।
बुभुक्षा मदपः कर्मपतिर्भोक्तेति चिंतयेत् ॥ २८ ॥

विष्णुपदी—लग्नेशादितोऽन्नचिंतादिकमाह—लग्नेशो लग्नस्वामी अन्नं प्रददाति इति अन्नप्रदोऽन्नदाता ज्ञेयः। सुखेशश्चतुर्थेशो भोज्यं भोक्तव्यमन्नादिकं भक्ष्यं ज्ञेयं "भोज्यं भक्ष्ये" बुभुक्षा भोक्तुमिच्छा क्षुधा मदपः सप्तमेशो ज्ञेयः। कर्मपतिर्दशमपतिर्भोक्ता इति क्रमतश्चिन्तयेत् ॥ २८ ॥

भाषार्थ—अथ भोजनचिंताप्रश्नमें--लग्नेश अन्नका देनेवाला होता है, चतुर्थस्थानका स्वामी भक्षणके योग्य अन्न होता है और सप्तम स्थानका स्वामी क्षुधा होती है और कर्मपति [ दशमेश ] अन्नके भक्षण करनेवाला होता है ॥ २८ ॥

क्षेपकमिदम्।

तिलान्नमर्के हिमगौ सतण्डुलं भौमे कुलत्थाश्चणकाश्च भोज्यम्।
बुधे समुद्गाः खलु राजमाषा गुरौ सगोधूमभुजिः सवीर्ये ॥ २९ ॥
शुक्रे यवा वाज्यरिका युगंधराः शनौ कुलत्थादिसमाषमन्नम्।
तुषान्नमन्नं शिखिराहुवीर्यौ शुभेक्षणालोकनतः सहर्षम् ॥ ३० ॥

विष्णुपदी—अनेन किमद्य भुक्तं भोक्षयितव्यमिति प्रश्ने—अर्के सूर्ये सबले तिलान्नं, हिमगौ चन्द्रे सतण्डुलं तिलान्नं कृसरमित्यर्थः। भौमे मंगले कुलत्था अन्नविशेषाः, चणकाश्च भोज्यमुच्यते। बुधे सबले मुद्गा वा मुद्गसहिता राजमाषाः, गुरौ सवीर्ये बलयुक्ते गोधूमभुजिः गोधूमान्नं भुक्तं स्यात्। शुक्रे सबले यवा यवान्नं, वाज्यरिका ( बाजरा ) इति प्रसिद्धमन्नं, युगंधरा अन्नभेदा ज्ञेयाः। शनौ सबले कुलत्थादिसहितं माषान्नं ज्ञेयम्। शिखिराहू सवीर्यौ तुषान्नं भोज्यम्। अथ शुभग्रहाणां वीक्षणतः सहर्षं हर्षेण सहितं भुक्तम्, अन्यथा हर्षरहितं ज्ञेयम्। अथ भोजनचिंता प्रकारान्तरेणोच्यते। उक्तं च नीलकण्ठाचार्यपादैः—" लग्ने लाभे च सत्खेटयुतदृष्टे सुभोजनम्। जीवे लग्ने सिते वापि सुभोज्यंदुस्थितावपि ॥ १ ॥ मन्दे तमसि वा लग्ने सूर्येणालोकिते युते। लभ्यते भोजनं नात्र शस्त्रभीतिस्तदा क्वचित् ॥ २ ॥ रविदृष्टयुतं वापि लग्नं न यदि तत्र हि। उपवासस्तदा वाच्यो नक्तं वा विरसाशनम् ॥ ३ ॥ चन्द्रे कर्मगते भोज्यमुष्णं शीतं सुखे कुजे। तुर्यस्थखेटवशतो भोज्यांते रसमादिशेत् ॥ ४ ॥ स्निग्धमन्नं सिते तुर्ये तैलसंस्कृतमर्कजे। नीचोपगैः कदश

विरसं न च संस्कृतम् ॥ ५ ॥ सूर्यादिभिर्लग्नगतैः सवीर्यै राजादिगेहे भुजिमामनन्ति । सुखे सुखेशे सबले सुभोज्यं चरादिगे स्यादसकृत्सकृद्धिः ॥ ६ ॥ मूलत्रिकोणगे खेटे लग्ने पितृगृहेऽशनम् । मित्रालये मित्रभस्थे शत्रुगेहेऽरिगेहगे ॥ ७ ॥ शुभेक्षितयुते लग्ने बलाढ्ये स्वगृहे भुजिः । ग्रहराशिस्वभावेन यत्नादन्यत्र चिंतयेत् ॥ १ ॥ सूर्ये मूल पुष्पमिन्दौ कुजे स्यात्पत्रं शाखा वापि शाकं स्ववीर्यैः । शुक्रेज्यज्ञैर्व्यंजनं भूरिभेदं मन्देनेत्थं सामिषं राहुकेत्वोः ॥ २ ॥" रसादिराजादिज्ञानार्थं श्लोकः प्रदर्श्यते । यथोक्तं बृहज्जातके-"राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ।" "अयनक्षणवासरर्त्तवो मासार्द्धं च समाश्च भास्करात् । कटुकलवणतिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि ॥" ॥ २९ ॥ ३० ॥

मधुरादिज्ञानके लिये चक्र लिखते हैं ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| अयन | मुहूर्त्त | दिन | ऋतु | मास | पक्ष | वर्ष | स्वामी |
| कटु | लवण | तिक्त | मिश्रित | मधुर | अम्ल | कषाय | स्वामी |

**भाषार्थ**-आज हमने क्या भोजन किया वा करेंगे इस प्रश्नमें-यदि सूर्य बली होय तो तिलान्न । चंद्र होय तो कृसर ( खिचडी ) मंगल होय तो कुलत्थ चणक । बुध होय तो मुद्ग ( मूंग ), राजमाष ( रहवाह ), बृहस्पति होय तो गोधूम ( कनक गेहूँ ) । शुक्र होय तो यव, बाजरा, युगंधर ( स्वांक ) । शनि बली होय तो कुलत्थ, माष अन्न । राहु केतु बलयुक्त हों तो तुषान्न । यदि शुभ ग्रह देखें तो आनंदसे भोजन किया । यदि पापी देखें तो क्रोधसे भोजन किया जानना । और प्रकारसे भोजनचिंता लिखते हैं-यदि लग्नस्थान एकादश स्थानमें शुभग्रह होय तो सुंदर भोजन मिलता है, अथवा बृहस्पति वा चंद्रमा लग्नगत होय तोभी सुंदर भोजन करता है ॥ १ ॥ यदि लग्नमें शनि वा राहु होय सूर्य देखे वा युक्त होवे तो उस दिन भोजन नहीं मिलता और शस्त्रका भय होता है ॥ २ ॥ यदि लग्नको सूर्य नहीं देखे वा युक्तभी नहीं होवे तो उस दिन उपवास होता है अथवा विरस अन्न रात्रिको भोजन करता है ॥ ३ ॥ यदि चन्द्रमा दशमें स्थित होय तो उष्ण ( गरम ) भोजन करता है । यदि चतुर्थ स्थानमें मंगल स्थित होय तो शीत अन्न भोजन करता

है। चतुर्थ स्थानस्थित ग्रहद्वारा भोज्यके अंतमें मधुरादि रस कहै ॥ ४ ॥ चतुर्थ स्थानमें शुक्र होय तो स्निग्ध ( घृतयुक्त ) अन्न खाता है। यदि शनि होय तो तेलसे पका भया भोजन करता है। यदि चतुर्थ स्थानमें नीचग्रह होय तो कदन्न ( निषिद्ध ) अन्न रसादिरहित अपक्व भोजन करता है ॥ ५ ॥ और सूर्यादिग्रह लग्नमें बलयुक्त होंय तो राजा आदिके गृहमें भोजन करता है यथा-सूर्य चन्द्र बली होय तो राजाके गृह । मंगल होय तो सेनानी ( करनेल ) के ग्रह । बुध होय तो राजपुत्रोंके गृह । बृहस्पति शुक्र होय तो मंत्रीके गृह । शनि होय तो चाकरके गृहमें भोजन करता है। यदि चतुर्थेश अपने गृहमें होय तो सुंदर भोजन कहै। यदि चतुर्थ राशि चर होय तो बार बार भोजन करता है। यदि स्थिर राशि होय तो एक बार भोजन करता है ॥ ६ ॥ मूलत्रिकोणमें ग्रह होय तो पिताके घरमें, मित्रगृहमें ग्रह हो तो मित्रके घरमें, यदि शत्रुकी राशिमें स्थित ग्रह होवे तो शत्रुके गृहमें भोजन करता है ॥ ७ ॥ यदि लग्नमें शुभग्रह होवे वा देखे, बलयुक्त होवे तो अपने गृहमें भोजन करता है। इसी प्रकार ग्रह और राशि स्वभाव जो पूर्व लिखा है उससे चिंतन करे ॥ १ ॥ सूर्य बली होय तो मूल, चन्द्र होय तो पुष्प, मंगल होय तो पत्र वा शाखा वा शाक। शुक्र, बुध, बृहस्पति होंय तो अनेक प्रकारके व्यंजनसे भोजन भक्षण कहै। शनिसे भी इसी तरह कहे। यदि राहु केतु होयँ तो मांससहित खाता है ॥ २ ॥ २९ ॥ ३० ॥

अथ चन्द्रवर्णः ।

मेषे वृषे सिंहगते च रक्तो द्वंद्वे स्त्रियां मीनहयोश्च पीतः । तुलालिकर्केषु च शुभ्रवर्णो मृगस्थिते कुम्भगते च कृष्णः ॥ ३१ ॥ रक्तचन्द्रे भवेद्युद्धं श्वेतचंद्रेऽर्थनाशनम् । पीतचंद्रे भवेत्सिद्धिः कृष्णचंद्रे महाभयम् ॥ ३२ ॥

विष्णुपदी-अथ राशितश्चन्द्रवर्णो निरूप्यते-मेषवृषसिंहराशौ चन्द्रस्य रक्तवर्णो भवेत् । मिथुनकन्यामीनधनूराशौ चन्द्रस्य पीतवर्णो भवति । तुलावृश्चिकर्कगते चंद्रे शुभ्रवर्णो ज्ञेयः । मकरकुम्भगतश्च कृष्णवर्णश्चंद्रमसो ज्ञेयः । तत्फलं तु-रक्तचंद्रे युद्धं भवति ।

श्वेतचंद्रो धननाशं करोति । पीते चंद्रे सिद्धिर्भवति । कृष्णचन्द्रे महाभयं ज्ञेयम् । सर्वत्र यात्रादौ ॥ ३१ ॥ ३२ ॥

भाषार्थ-अब चंद्रवर्ण लिखते हैं-मेष वृष सिंह राशिमें चंद्रमाका रक्तवर्ण होता है। मिथुन कन्या मीन लग्नमें चंद्रमाका पीतवर्ण होता है। तुला वृश्चिक कर्क राशिमें चंद्रमाका शुभ्रवर्ण होता है। मकर कुंभ राशिमें कृष्ण वर्ण चंद्रमाका होता है। रक्तचंद्रमामें युद्ध, श्वेतचंद्रमामें धननाश, पीतचंद्रमामें धनलाभ, कृष्णचंद्रमामें बडा भय होता है। यह यात्रादिकोंमें विचारना चाहिये ॥ ३१ ॥ ३२ ॥

चक्र।

| रक्तचंद्र | पीतचंद्र | श्वेतचंद्र | कृष्णचंद्र | वर्ण |
|---|---|---|---|---|
| मेष वृष सिंह | मिथुन कन्या धनु मीन | तुला वृश्चिक कर्क | मकर कुंभ | राशि |
| युद्ध | धन लाभ सिद्धि | धननाश | महाभय | फल |

अथ दूरस्थो जीवति न वेति प्रश्ने।

वारर्क्षतिथियोगास्तु घटिकाद्यादिकास्तथा। चैत्राद्या गतमासाश्च प्रवासिनामसंयुताः। सप्तभिश्च हरेद्भागं शेषं चैव शुभाशुभम् ॥ ३३ ॥ प्रथमे च द्वितीये च प्रवासी लाभसंयुतः। तृतीये च चतुर्थे च प्रवासी कष्टतां गतः ॥ ३४ ॥ पञ्चमे चापमृत्युश्च षष्ठे वै दीर्घरोगयुक् । सप्तमे च भवेन्मृत्युः शारदावचनं यथा ॥ ३५ ॥

विष्णुपदी-वारो दिवसस्तिथयस्तात्कालीना एवं योगाश्च घटिका इष्टात्मिकाः चैत्रमारभ्य गतमासास्तावत्संख्याः, प्रवासिपुरुषनामाक्षरसंयुताः एतेषां पिण्डं कार्यं पुनः सप्तभिर्भागो दातव्यः। प्रथमाङ्के शेषे वा द्वितीयेऽङ्के शेषे लाभेन संयुक्तः प्रवासी धनयुक्तो वर्ततेऽधुना। एवं तृतीयेऽङ्के चतुर्थेऽङ्के शेषे प्रवासी कष्टं प्राप्नोति। पञ्चमाङ्के शेषे प्रवासी अपमृत्युना मृतः। षष्ठेऽङ्के शेषे प्रवासी दीर्घरोगेण संयुतो ज्ञेयः। सप्तमाङ्के शेषे प्रवासी मृत्युं प्राप्तः। शारदावचनं दृढप्रत्ययार्थम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

भाषार्थ-तिथि, वार, नक्षत्र, इष्टघटी, चैत्रसे आदि ले गतमास, प्रवासी पुरुषके नामके अक्षर यह इकट्ठे कर सातसे भाग देवे शेष जो आवे उससे फल कहै। यदि एक दो अङ्क १। २ मिलें तो प्रवासीको धनलाभ कहै। यदि तीन ३ वा चार ४ अंक मिलें तो प्रवासी कष्टयुक्त होता है। यदि पांच मिलें तो अपमृत्युसे प्रवासी मृत हुआ। यदि षट् ६ अंक मिलें तो वह दीर्घ रोगयुक्त है। यदि सात ७ अंक मिलें तो

प्रवासी मृत्युको प्राप्त हुआ यह कहै। शारदावचन सर्वत्र निश्चयार्थ है ॥३३-३५॥

अथ राशिनिर्णयः ।

विवाहे सर्वमाङ्गल्ये यात्रायां ग्रहगोचरे ।
जन्मराशेः प्रधानत्वं नामराशिं न चिंतयेत् ॥ ३६ ॥

विष्णुपदी-विवाहे विवाहलग्नशुद्धयर्थं, तथा सर्वमाङ्गल्ये चूडाकरणोपनयनादिसंस्कारे, तथा यात्रायां गमनार्थमुद्यतस्य शुभाशुभनिरूपणार्थं ग्रहगोचरे राशिवशाद्ग्रहाचारशुभाशुभफलकथने एषु कर्मसु जन्मराशेः प्रधानत्वं मुख्यत्वमतस्तत्र नामराशिं न चिंतयेत् बुद्धिमानिति शेषः ॥ ३६ ॥

भाषार्थ-विवाहमें शुभाशुभ ज्ञानके लिये तथा सर्वमांगल्यकार्य दशसंस्कार आदिमें तथा यात्रामें और ग्रहचारपरसे शुभाशुभ फल कथन करनेमें जन्मराशिकीही प्रधानता है इसलिये वहां नामकी राशि न चिंतन करै ॥३६॥

देशे ग्रामे गृहे युद्धे सेवायां व्यवहारके ।
नामराशेः प्रधानत्वं जन्मराशिं न चिंतयेत् ॥ ३७ ॥

विष्णुपदी-देशे देशान्तरे धनप्राप्त्यर्थगमने, एवं ग्रामे नगरे निवासार्थं, गृहप्रवेशादौ, युद्धे शत्रुभिः सह योद्धुं सेवायां स्वामिनः । "सेवा कार्या स्वामिनः सेवकेन" इत्यादौ । व्यवहारकेऽखिलसामान्यकर्मणि नामराशेः प्रधानत्व प्राधान्यं, तत्र जन्मनो राशिं न विचारयेत् ॥ ३७ ॥

भाषार्थ-देशादिमें धनके लिये, तथा ग्रामनगरमें और गृहप्रवेशमें, युद्धमें, सेवामें, संपूर्ण सामान्यकार्योंमें नामराशि मुख्य है, जन्मराशि नहीं विचारै ॥३७॥

काकिन्यां वर्गशुद्धौ च वादे द्यूते स्वरोदये ।
कण्ठे पुनर्भूवर्णे च नामराशेः प्रधानता ॥ ३८ ॥

विष्णुपदी-तथा काकिनीलाभार्थं ज्ञायते तत्र वर्गशुद्धौ अकचटतपादौ मूषिकादौ वा, वादे प्राड्विवाकसन्मुखगमनार्थं, स्वरोदये स्वरशास्त्रारंभे, कंठे गन्धर्वशास्त्रज्ञानार्थं गानार्थं वा प्रवृत्ते, एवं पुनर्भूवर्णे पुनर्भ्वादौ शुभाशुभनिरूपणार्थं नामराशेः प्रधानता मुख्यता ज्ञेया ॥ ३८ ॥

भाषार्थ-काकिनी, वर्गशुद्धिमें, वाद ( कलह ) में, द्यूतमें, स्वरोदयमें, गंधर्वविद्यामें, पुनर्भूस्त्रीके शुभाशुभ ज्ञानके लिये नामराशिकी प्रधानता है ॥ १८ ॥

रविर्नृपविलोकने सुरगुरुर्विवाहोत्सवे रणे धरणिनंदनो भृगुसुतः-

प्रयाणे बली । शनिश्च भृतिलक्षणे निखिलशास्त्रबोधे बुधः शशी
सकलकर्मसु ध्रुवमुदाहृताः सूरिभिः ॥ ३९ ॥

विष्णुपदी-नृपविलोकने राजसंदर्शने रविः सूर्यो बली श्रेष्ठो भवति । विवाहोत्सवे विवाहकर्मणि सुरगुरोः प्राधान्यम् । रणे युद्धे धरणिनंदनस्य भौमस्य प्राधान्यम्। प्रयाणे यात्रायां शुक्रो बली ग्राह्यः । भृत्यकर्मणि शनैश्वरो बली ग्राह्यः। सकलकर्मसु सर्वत्र सर्वदा सर्वकर्मसु शशी श्रेष्ठो भवति । सूरिभिः पूर्वाचार्यैः एषु पूर्वोक्तकर्मस्वेते ध्रुवमुदाहृताः ॥ ३९ ॥

भाषार्थ-राजाके दर्शनके लिये सूर्य बली श्रेष्ठ होता है । बृहस्पति विवाहमें, मंगल युद्धमें, शुक्र यात्रामें, शनैश्वर भृतिकर्ममें, चन्द्रमा संपूर्ण कार्योंमें श्रेष्ठ होता है । यह इन कर्मोंमें पूर्व आचार्योंने निश्चयसे कहे हैं ॥ ३९ ॥

इति प्रश्नानुगग्रन्थो जगच्चिन्तानिवारणः ।
चंडेश्वराभिधः प्रोक्तो जगदानन्दकारकः ॥ ४० ॥

इति श्रीमन्महामहोपाध्यायश्रीदैवज्ञरामकृष्णविरचिते प्रश्नचण्डेश्वराभिधे युद्धप्रश्नादिविचाराध्यायः सप्तमः ॥ ७ ॥

शुभम्-श्रीलश्रीः ।

विष्णुपदी-अथोपसंहरति ग्रन्थकृत्-इतीति । इति पूर्वोक्तः प्रश्नाभिधः प्रश्नशास्त्रं जगच्चिंतानिवारणः लोकानां चिंता मम कार्यं भविष्यति न वेतत्यादिचिंतांधकारस्य चडांशुरिव नाशकः तथा जगदानंदकारकः सर्वानन्दहेतुः अत एव प्रश्नचन्डेश्वराभिधः प्रश्नचन्डेश्वरनामा ग्रन्थोऽयं श्रीपदवाक्यप्रमाणपारावारीणसर्वोपमेयैः श्रीरामकृष्णदैवज्ञवर्य्यैः प्रोक्तः सच्छिष्यबुद्धिप्रकाशार्थमतिसरलतया तथा च विस्तरेण कथितः ॥ ४० ॥

इति श्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शोरि ) अन्वयालंकृतिश्रीदैववेदिघनैयारामप्रपौत्रश्रीवैकुण्ठपीठाधिष्ठितश्रीतुलसीरामपौत्रश्रीदैवज्ञदुनिन्द्रात्मजपंडितविष्णुदत्तवैदिककृता प्रश्नचन्डेश्वराभिधग्रंथस्य टीका श्रीविष्णुपदी वसुवेदाङ्कभूमिते १९४८ वैक्रमेऽब्दे भाद्रपदशुक्लद्वितीयायांशुक्रवासरे समाप्तिमगात् । समाप्तश्चायं सप्तमोऽध्यायः ॥ ७ ॥

शुभमस्तु ।

भाषार्थ-सांसारिक मनुष्योंके चिन्ता निवारण अर्थात् असुक काम होगा या नहीं इस विषयकी चिन्तारूप अन्धकारको निवारण करनेमें सूर्यके समान अत एव जगत्को आनन्द देनेवाला यह प्रश्नचन्डेश्वर नामक ग्रन्थ कथन किया गया है ४०

इति श्रीदैवज्ञदुनिचन्द्रात्मजश्रीविष्णुदत्तवैदिककृतप्रश्नचण्डेश्वरभाषाभावार्थे युद्धप्रश्नादिविचाराध्यायः सप्तमः ॥ ७ ॥

समाप्तोऽयं ग्रन्थः ।

श्रीरामचन्द्रप्रसादसिद्धिरस्तु ।

ॐ नमो गणपतये ।

# अथ प्रकीर्णाध्यायः प्रारभ्यते ।

अथ रोगिप्रश्नः ।

तिथिं वारं च नक्षत्रं लग्नं प्रहरमेव च ।
अष्टाभिस्तु हरेद्भागं शेषाङ्कैः फलमादिशेत् ॥ १ ॥

तत्फलं यथा ।

हया ७ ऽग्नौ ३ देवताबाधा पैत्री वै नेत्र २ दन्तिषु ८ ।
षट्चतुर्षु भूतबाधा न बाधा एकपञ्चके ॥ २ ॥

भाषार्थ-तिथि वार नक्षत्र लग्न प्रहर इकट्ठे कर आठसे भाग देवे यदि सात मिले वा तीन मिले तो देवताकी पीडा कहै। यदि दो २ वा आठ मिले तो पितरकी पीडा कहै। यदि षट् ६ चार ४ मिले तो भूतकरके पीडित कहै। यदि एक पांच मिले तौ बाधा नहीं, रोगमात्रही है ॥ १ ॥ २ ॥

अथ रोगप्रश्नः ।

मेषे च देवीदोषः स्याद्वृषे दोषश्च पैतृकः ।
मिथुने शाकिनीदोषः कर्कटे भूतदोषकः ॥ १ ॥
सिंहे सहोदराणां वै कन्यायां कुलमातृजः ।
तुले दोषश्चंडिकाया नाडीदोषो हि वृश्चिके ॥
चापे च यक्षिणी पीडा मकरे ग्रामदैवतात् ॥
पुत्राच्च द्विजः कुम्भे मीने त्वाकाशगामिनः ॥ २ ॥

अन्यच्च ।

रुद्राहिशार्काम्बुपयाम्यपूर्वाद्विदैववस्वग्निषु पापवारे ।
रिक्ताहरिस्कंददिने च रोगे शीघ्रं भवेद्रोगिजनस्य मृत्युः ॥ १ ॥

अथ गतवस्तुनः स्थानं निरूप्यते ।

तद्यथा—तिथिं वारं च नक्षत्रं प्रहरेण समन्वितम् ।
दिक्संख्यया हतं चैव सप्तभिर्विभजेत्पुनः ॥
तत्फलम्—एकेन भूतले द्रव्यं द्वयं चेद्भाण्डसंस्थितम् ।
त्रिभिस्तु जलमध्यस्थमतरिक्षे चतुर्थके ॥
तुषस्थं पञ्चमे तु स्यात्षष्ठे गोमयमध्यगम् ।
सप्तमे भस्ममध्यस्थमित्येतत्प्रश्नलक्षणम् ॥

अथ सिद्ध्यसिद्धिप्रश्नः ।

तिथिः प्रहरसंयुक्ता तारकावारमिश्रिता ।
वह्निभिस्तु हरेद्भागं शेषं सत्त्वं रजस्तमः ॥
फलम्—सिद्धिस्तात्कालिकी सत्त्वे रजसा तु विलम्बतः ।
तमसा निष्फलं कार्यं ज्ञातव्यं प्रश्नकोविदैः ॥

अथ वृष्टिज्ञानं लिख्यते ।

दिनार्द्धे प्रत्यहं वृष्टिः पञ्चाहं जायते शुभा । नीरनाड्यां गते चन्द्रे मिश्रैः खेटैश्च संयुते ॥ १ ॥ पादोने त्रिदिनं वृष्टिर्बहुतोया भवेच्छुभा । नीराख्यं जलपीयूषनाडीस्थाः खेचराः क्रमात् ॥ २ ॥ धृत्य १८ र्क १२ रस ६ संख्याकान्वासरान्बहुवृष्टिदाः । सौम्यनाडीस्थिताः सर्वे त्र्यहं वृष्टिप्रदाः खगाः ॥ ३ ॥ चन्द्रवाय्वग्निनाडीस्था महावातातपप्रदाः । योगे शुभाधिके नाडी निर्जलापि जलप्रदा ॥ ४ ॥ योगे क्रूराधिकं ज्ञेया सजला निर्जला बुधैः । सौम्यनाड्यां स्थिताः पापा अनावृष्टिकरा मताः ॥५॥ शुभास्तोयांशकाश्चेत्स्युः स्वल्पवृष्टिप्रदास्तदा । एकनाडीस्थिता भौमजीवचन्द्रमसो यदि ॥ ६ ॥ वारिपूर्णा भवेत्पृथ्वी बहुवृष्ट्यां तदाखिला । भृगुसौम्यौ यदैकत्र स्यातां जीवान्वितौ तदा ॥ ७ ॥ वृष्टिः स्याद्बहुलाऽकस्माच्चन्द्रयोगे विशेषतः । भृगुचन्द्रमसौ पापैः खेचरैर्यदि संयुतौ । तदा स्वल्पोदका वृष्टिर्जलयोगे महत्यपि ॥ ८ ॥

अथ शुक्रस्थितिवशाद्ग्रहयोगाच्च वृष्टिज्ञानम् ।

मघादिपञ्चधिष्ण्यस्थः शुक्रः प्रागुदितो निशम् । वृष्टिकृत्पश्चिमाशास्थः स्वात्यादित्रितये स्थितः ॥ ९ ॥ वैपरीत्यमितो यातो भृगुर्यदि कुवर्षणम् । कुर्वीते बहुलां

वृष्टिं बुधशुक्रौ च संयुतौ ॥ १० ॥ समुद्रशोषणे सक्तस्तयोरंतर्गतो रविः । शुक्रात्सप्तमगश्चन्द्रो वृष्टिदः स्याच्छुभेक्षितः । मंदाद्वा द्यून ७ कोणस्थ ९ । ५ श्चन्द्रमा वृष्टिकृत्तदा ॥ ११ ॥ ग्रहाणामुदये चास्ते राश्यन्तर्गमनेऽयने संयोगे वाथ पक्षान्ते प्रायो वृष्टिः प्रजायते ॥ १२ ॥

अथ संक्रांतिवृष्टिफलम् ।

मार्गकार्त्तिकसंक्रांतौ वृष्टिर्भवति मध्यमा । पौषे माघे सुखं नृणां सस्यपूर्णा वसुंधरा ॥ १ ॥ चैत्रफाल्गुनवैशाखे ज्येष्ठे संक्रांतिवृष्टिदः । यदि वर्षति सर्वत्र सुभिक्षं च प्रजायते ॥ २ ॥ आषाढे संक्रमे वृष्टिर्व्याधिश्च श्रावणे सुखम् । भाद्रे च बहवो रोगाः शुभं सर्वत्र चाश्विने ॥ ३ ॥

अथ जलशोषणयोगमाह ।

सूर्ये च पित्र्यरौद्रेषु प्रजापत्युत्तरामृगे । विचरञ्जलदान्हंति भौमः संवर्तकानपि ॥ १ ॥ ध्रुवे च वैष्णवे वापि मूल शाक्रे चरे कुजे । घोरां करोत्यनावृष्टिं तनुवृष्टिं विमुञ्चति ॥ २ ॥ दैवज्ञकण्ठाभरणे तु—"व्रजति यदि कुजः पतङ्गपृष्ठे घट इव भिन्नतनुर्जलं ददाति । अथ चलति दिवाकराग्रतोऽसौ प्रलयघनानपि शोषितुं समर्थः ॥ १ ॥" मेघमालायाम्—"ध्रुवे च वैष्णवे हस्ते मूल शाक्रे चरे कुजः । घोरां करोत्यनावृष्टिं कृत्तिकासु मघासु च ॥" अत्रापि विशेषमाह—"अङ्गारको यदा सिंहे तदाऽङ्गारवती मही । स एव कन्यकायुक्तः समुद्रमपि शोषयेत् ॥ अतिचारगते सौम्ये क्रूरे वक्रत्वमागते । हाहाभूतं जगत्सर्वं रुंडमुण्डं च जायते ॥ अङ्गारको भौमः सूर्यस्य पुरतः सिंहकन्यायां स्थितः जलशोषकर इत्यर्थः । अनुसरणे वृष्टिमल्पां कुरुते ।

अथ ग्रहवृष्टिज्ञानम् ।

चलत्यङ्गारके वृष्टिरुदये च बृहस्पतिः ।
शुक्रस्यास्तं गते वृष्टिस्त्रिधा वृष्टिः शनैश्चरे ॥

अथार्घकाण्डं निरूप्यते ।

सङ्क्रांतितिथिवारस्य नक्षत्रस्य च वस्तुनः ।
सर्वाङ्कैकत्रक कृत्वा भागो देयस्त्रिभिस्तथा ॥

तत्फलम्–एके शेषे सुभिक्षं स्याद्द्वितीये च समं भवेत् ।
शून्यं भवति दुर्भिक्षमेवं सर्वत्र चिन्त्यते ॥ इति ॥

अथ जलवर्षणज्ञानार्थं सप्तनाडीचक्रम् ।

| चण्डा | कृ | वि | अनु | भ | शनैश्चर |
|---|---|---|---|---|---|
| वायु | रो | वा | ज्ये | अ | रवि |
| दहना | मृ | चि | | रे | मंगल |
| सौम्य | आर्द्रा | ह | पू. षा | उ० भा | जीव |
| नीरा | पु | उ | उ. षा | पू० भा | शुक्र |
| जला | पुष्य | पू | अभि | शत | बुध |
| अमृत | आश्ले | म | श्र | ध | चंद्रमा |

अथ अन्नादिविशेषज्ञापनार्थं कोष्ठकम् ।

| | |
|---|---|
| मेष | आविकवस्त्र \| मसूर \| कनक \| राल \| जव स्थल संभव दुशाला दि \| औषधि इनका स्वामी मेष है |
| वृष | पुष्प \| शालि \| जव \| माहिष \| वृष |
| मिथुन | धान्य शारद चावल आदि \| कार्पास |
| कर्क | कोद्राविला दूर्वा फल कंद |
| सिंह | सिंह तुषधान्य धान आदि \| रस त्वचा \| चर्म छन |
| कन्या | अलसी \| कनक \| मूग |
| तुला | माष \| सर्षप \| जव |
| वृश्चिक | गन्ने \| पौन्ने \| लोहा |
| धन | अश्व \| लवण \| शस्त्र \| तेल |
| मकर | तरुवृक्षगुल्म \| सुवर्ण लोहा |
| कुम्भ | जलोत्पन्न संगडा आदि \| पुष्प \| फल \| रत्न |
| मीन | व्रज \| स्नेह \| जलोद्भव |

अर्थात् जिस राशिसे ४।१०।१।११।७।९।५। बृहस्पति होय तो उस राशिके पदार्थ सस्ते हो जाते हैं। और ६। ७ शुक्र होय तो नाशकारक है और स्थानोंमें वृद्धि करता है।

## अथ रामोक्तकष्टावली लिख्यते ।

| नक्षत्र | पाद १ | पाद २ | पाद ३ | पाद ४ | दान |
|---|---|---|---|---|---|
| अश्विनी | ९ | १३ | १३ | ३ | ब्राह्मणभोजन |
| भरणी | ११ | १३ | २७ | १७ | गोदान |
| कृत्तिका | ९ | ८ | २५ | १४ | सुवर्णदान |
| रोहिणी | ७ | २० | ४ | ३४ | घृतदान |
| मृगशिर | ३ | १८ | २२ | २८ | तिलदान |
| आर्द्रा | १ | २७ | २८ | १७ | गोदान |
| पुनर्वसु | ७ | ५ | १८ | २८ | पित्तलदान |
| पुष्य | ७ | १७ | २४ | १९ | चावलदान |
| आश्लेषा | ६ | ० | ० | ० | मृत्यंजय जपगोदान |
| मघा | २० | १६ | १८ | २८ | वस्त्रदान |
| पू. फा. | १ | १८ | २४ | १६ | ब्राह्मण भोजन |
| उ. फा | ७ | १५ | २९ | २८ | अन्नदान |
| हस्त | १५ | २३ | १४ | २६ | तिलदान |
| चित्रा | ११ | १८ | १६ | १५ | दुग्धदान |
| स्वाती | १ | २२ | १५ | २४ | गोदान |
| विशाखा | १२ | ६ | २८ | १९ | कनकदान |
| अनुराधा | १ | २६ | १४ | २६ | घृतदान |
| ज्येष्ठा | ६ | १५ | २८ | १७ | तिलदान |
| मूल | ९ | ३० | १९ | ११ | उपानह्दान जोडा |
| पू. षा. | १ | २६ | १७ | १८ | गोदान |
| उ. षा. | ३ | १५ | २६ | १७ | ब्राह्मणभोजन |
| श्रवण | ११ | २६ | १४ | २९ | श्रीफलदान |
| धनिष्ठा | १५ | १८ | २६ | २५ | अन्नदान |
| शतभिषा | १२ | १६ | १८ | १६ | ब्राह्मण भोजन |
| पू. भा. | १ | १४ | १ | १९ | अन्नदान |
| उ. भा. | ७ | १३ | २६ | १८ | अन्नदान |
| रेवती | १ | २८ | २० | ४० | वृषभदान |

## अथ काकशब्दविचार ।

| प्रहर | पूर्व | अग्नि | दक्षिण | निर्ऋति | पश्चिम | वायु | उत्तर | ईशान | दि. |
|---|---|---|---|---|---|---|---|---|---|
| १ | अग्नि भय | वर्षा | सिद्धि | इष्टा-गम | शुभ | शुभ-वार्ता | इष्टा-गम | मनोर सिद्धि | १ मे |
| २ | वरा-गम | शोक | शुभ | क्षेम | इष्टा-गम | शोक | कार्य सिद्धि | भय | २ मे |
| ३ | अग्नि भय | इष्टा-गम | वस्त्र-लाभ | इष्ट-प्राप्ति | शुभ | धन लाभ | अर्थ-लाभ | सन्तोष | ३ में |
| ४ | शुभ | यात्रा | मित्र-लाभ | संतोष | चिन्ता | इष्ट लाभ | धन-लाभ | उद्वेग | ४ में |

## काकशब्दविचार ।

| वार | पूर्वमें | अग्नि कोणमें | दक्षि-णमें | निर्ऋ-तिमें | पश्चि-ममें | वाय-व्यमें | उत्तरमें | ईशा नमें |
|---|---|---|---|---|---|---|---|---|
| सू. | विघ्न | विलंब | उत्तम फल | मरण भय | शुभ फल | आग-मन | इष्ट लाभ | शुभ कार्य |
| चं. | महा-लाभ | धन-लाभ | मरण | लाभ | शुभ | उत्तम फल | अल्प फल | अर्थ-लाभ |
| मं. | लाभ | शरीर सुख | विलंब | मरण | धन लाभ | विदेश गमन | सुख | मित्र प्राप्ति |
| बु. | मित्रा-गम | शुभ कार्य | अरिष्ट | विलंब | मरण | धन-नाश | तस्कर | मित्रा-गम |
| बृ. | अर्थ सिद्धि | कलह लडाई | विलंब | उत्तम फल | चौर-भय | मरण | कष्ट संकट | शत्रु नाश |
| शु. | चिंता नाश | कष्ट-नाश | मित्रा-गम | अर्थ लाभ | उत्तम फल | विलंब | मरण | अर्थ-नाश |
| श. | अर्थ नाश | विलंब | शुभ वार्ता | मित्रा-गम | उत्तम फल | शुभ फल | विलंब | अर्थ-नाश |

सर्वदिक्षु क्षुतं नेष्टं गोक्षुतं मरणप्रदम् ।
अफलं तत्क्षुतं वाच्यं वृद्धपीनसकैतवैः ॥ १ ॥
औषधे वाहनारोहे विवादे शयनेऽशने ।
विद्यारंभे बीजवापे क्षुतं सप्तसु शोभनम् ॥ २ ॥

अथ रविसंक्रांतौ करणपरत्वेन वाहनवस्त्रायुधभक्ष्यलेपनजातिपुष्पाण्याह ।

| बव | बालव | कौलव | तैतिल | गर | वणिज | विष्टि | शकुन | चतुष्पाद | नाग | किस्तुघ्न | करण |
|---|---|---|---|---|---|---|---|---|---|---|---|
| सिंह | व्याघ्र | वराह | रासभ | गज | महिष | अश्व | श्वा | अज | गौ | चरणायुध | वाहन |
| श्वेत | पीत | हरित | पांडु | रक्त | ईषत्कृष्ण | कृष्ण | चित्र | कंबल | नग्न | मेघांबर | वस्त्र |
| भुशुंडी | गदा | खड्ग | दंड | धनु | तोमर | कुन्त | पाश | अंकुश | अस्त्र | बाण | आयुध |
| अन्न | पायस | भिक्षा | पक्कान्न | दुग्ध | दधि | चित्रान्न | गुड | मधु | घृत | शर्करा | भक्षण |
| कस्तूरी | कुंकुम | चंदन | मृत्तिका | गोरोचन | महावर | बिलावमद | हरिताल | कज्जल | कालागुरु | कर्पूर | लेपन |
| देवता | भूत | सर्प | पक्षी | पशु | मृग | ब्राह्मण | क्षत्रिय | वैश्य | शूद्र | संकर | जाति |
| नागकेशर | जलवती | बकुल | केतकी | बिल्व | अर्क | दूर्वा | कमल | मालती | गुलाब | गुडहल | पुष्प |

## अथ यात्रायां शुभशकुनानि ।

विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं वेश्यावाद्यमयूरचाषनकुला बद्धैकपश्वामिषम् । सद्वाक्यं कुसुमेक्षुपूर्णकलशच्छत्राणि मृत्कन्यका रत्नोष्णीषसितोक्षमद्यससुतस्त्रीदीप्तवैश्वानराः ॥ १ ॥ आदर्शाञ्जनधौतवस्त्ररजका मीनाज्यसिंहासनं शावं रोदनवर्जितं ध्वजमधुच्छागास्त्रगोरोचनम् । भारद्वाजनृयानवेदनिनदा माङ्गल्यगीतांकुशा दृष्टाः सत्फलदाः प्रयाणसमये रिक्तो घटः स्वानुगः ॥ २ ॥

विप्र, अश्व, गज, फल, अन्न, दुग्ध, दधि, गौ, सर्षप, कमल, स्वच्छ वस्त्र, वेश्या, वाद्य, मोर, चाष, निडनकुल, बद्ध पशु, मांस, सद्ववचन, पुष्प, गन्ना, जलपूर्ण कुंभ, छत्र, मृत्तिका, कन्या, रत्न, उष्णीष, श्वेत, वृष, मद्य, सपुत्र स्त्री, दीप्ताग्नि, आदर्श, अंजन, धौतवस्त्र, रजक, मत्स्य, घृत, सिंहासन, रोदनरहित शव, पताका, मधु, मेष, अस्त्र, गोरोचन, भरद्वाजपक्षी, शिविका, वेदशब्द, मंगलशब्द, गीत, अंकुश, पीछेमें खाली घडा ये गमनकालमें प्रशस्त शकुन हैं ॥ १ ॥ २ ॥

## अथापशकुनानि ।

वन्ध्याचर्मतुषास्थिसर्पलवणांगारेन्धनक्लीबविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः । नग्नाभ्यक्तविमुक्तकेशपतितव्यंगक्षुधार्ता असृक्स्त्रीपुष्पं सरटः स्वगेहदहनं मार्जारयुद्धं क्षुतम् ॥ १ ॥ काषायी गुडतक्रपंकविधवा कुब्जः कुटुम्बे कलिर्वस्त्रोदस्खलनं लुलायसमरं कृष्णानि धान्यानि च । कार्पासं वमनं च गर्दभरवो दक्षेऽतिरुङ्गर्भिणी मुंडार्द्राम्बरदुर्वचोऽन्धबधिरोदक्या न दृष्टाः शुभाः ॥ २ ॥ गोधाजाहकसूकराहिशशकानामिति ॥

वंध्या स्त्री, चर्म, तुष, अस्थि, सर्प, लवण, अंगार, ईंधन, नपुंसक, विष्ठा, तैल, उन्मत्त, चर्बी, औषधी, शत्रु, जटिल, संन्यासी, तृण, रोगी, नग्न, तैलाभ्यंग, मुक्तकेश, पतित, अंगहीन, क्षुधित, रुधिर, स्त्रीपुष्प, किरला, स्वगृहदहन मार्जारयुद्ध, छिक्कर, काषायी, गुड, तक्र, कीचड, विधवा, कुब्ज, गृहकलि, वस्त्रपतन, महिषयुद्ध, कृष्णाधान्य, रुई, वमन, गर्दभरव, दक्षिणमें, क्रोधी, गर्भवती,मुंडित, संन्यासी, आर्द्रवस्त्र, दुर्वाक्य, अंध, बधिर, रजस्वला, गोधा, मूषिक, सूकर, अहि, शशक ये गमनकालमें अपशकुन हैं ॥ १ ॥ २ ॥

### अथैकमासे पंचवारफलम् ।

यत्र मासे रवेर्वारा जायंते पंच संततम् । दुर्भिक्षं छत्रभङ्गं च तत्रास्ते च महाभयम् ॥ १ ॥ सोमस्य पञ्च वाराश्च यत्र मासे भवंति च । धनधान्यसमृद्धिश्च सुखं भवति सर्वदा ॥ २ ॥ यत्र मासे मंगलस्य जायंते पंच वासराः । रक्तेन पूरिता पृथ्वी छत्र-

भंगस्तदा भवेत् ॥ ३ ॥ बुधस्य पंच वारा स्युर्यत्र मासं निरंतरम् । प्रजानां सुखमत्यन्तं सुभिक्षं च प्रजायते ॥ ४ ॥ शुक्रस्य पंच वाराः स्युर्यत्र मासे निरंतरम् । प्रजावृद्धिः सुभिक्षं च सुखं तत्र प्रवर्त्तते ॥ ५ ॥ गुरोरप्येवम् ॥ सौरेर्येत्पञ्चकं दृष्ट्वा पाताले कंपते फणी । ईशाने देशभंगश्च वह्निदाहो महर्घता ॥ ६ ॥

अथाङ्गस्फुरणफलं निरूप्यते ।

अर्थात् संप्रवक्ष्यामि यथोक्तं रुद्रयामले ।
येन विज्ञातमात्रेण ज्ञायते च शुभाशुभम् ॥ १ ॥
शिरसि स्फुरणे राज्यं स्थानलाभं ललाटके ।
भ्रूयुगे तु महासौख्यं स्थानलाभं च मस्तके ॥ २ ॥
नेत्रे तु प्रियप्राप्तिश्च कर्णे कर्णशुभं भवेत् ।
नासिकायां सुगन्धाप्तिः कपोले तु वरांगना ॥ ३ ॥
ओष्ठे वा कलहो ज्ञेयो मुखे मिष्टान्नभोजनम् ।
अधरे चुंबनं क्रीडा चिबुके लोभमादिशेत् ॥ ४ ॥
कण्ठभूषास्तु कण्ठे च ग्रीवायां मृत्युमादिशेत् ।
पृष्ठे परोक्षवार्ता च स्कन्धे बन्धुसमागमम् ॥ ५ ॥
हृदये वांछिता सिद्धिर्जठरे क्षीरभोजनम् ।
कटिदेशे वाहनाप्तिर्गुह्ये परवधे रतिः ॥ ६ ॥
सम्भोगो मेढ्रदेशे तु संतानाप्तिश्च जायते ।
हर्षप्राप्तिर्वृषणयोर्वृत्तान्तश्च शुभो भवेत् ॥ ७ ॥
ऊरुयुग्मे तु वस्त्राणि जंघयोर्बान्धवं धनम् ।
गमनं वामपादे तु दक्षिणे स्थानलाभकृत् ।
दक्षिणाङ्गं शुभं पुंसां वामाङ्गं योषितां तथा ॥ ८ ॥
नेत्रस्याधः स्फुरणमसकृत्संगरे भंगहेतु-
र्नेत्रस्योर्ध्वं हरति सकलं मानसं दुःखजालम् ।
नेत्रस्यान्ते कथयति सुखं नासिकान्ते च मृत्यु-
श्चैतत्सर्वं फलमिह कथितं वैपरीत्यं च वामे ॥ ९ ॥

अथ पल्लीसरटपतनारोहणफलम् ।

पल्लीस्पर्शफलं वक्ष्ये यदुक्तं ब्रह्मणा पुरा ।
ब्रह्मस्थाने भवेद्राज्यं स्थानलाभो ललाटके ॥ १ ॥
कर्णयोर्भूषणावाप्तिर्नेत्रयोः प्रियदर्शनम् ।
नासिकाया सुगंधाप्तिर्मुने मिष्टान्नभोजनम् ॥ २ ॥
कपोलयोर्भवेत्सौख्यं हृदि देशे महद्भयम् ।
भृकुट्यां विग्रहश्चैव कंठे भावसमागमः ॥ ३ ॥
दक्षिणांसे जयो नित्यं वामांसे शत्रुजं भयम् ।
इष्टलाभो भुजे दक्षे बाह्वोः सुमणिबन्धनम् ॥ ४ ॥
दक्षे करतले द्रव्यं तत्पृष्ठे सद्व्ययो भवेत् ।
वामे भुजेऽनिष्टमेव मणिबंधे धनक्षयः ॥ ५ ॥
वामे कतरले हानिस्तत्पृष्ठे चार्थनाशनम् ।
हृदये राजसन्मानः सौभाग्यं दक्षिणे स्तने ॥ ६ ॥
दक्षपार्श्वे च भोगाप्तिः स्तने वामे यशोभयम् ।
वामेपार्श्वे भवेत्पीडा वामकुक्षौ शिशोस्तथा ॥ ७ ॥
दक्षकुक्षौ सुतावाप्तिरुदरे च विशेषतः ।
वस्त्रावाप्तिर्दक्षकट्यां वामकट्यां सुखक्षयः ॥ ८ ॥
नाभौ मनोरथावाप्तिर्बिले द्रव्यच्युतिर्भवेत् ।
गुह्ये मृत्युर्गुदे रोगो दक्षोरौ प्रीतिवर्द्धनम् ॥ ९ ॥
वामोरौ मृत्युदं दुःखं दक्षजानौ सुखावहम् ।
पशुहानिर्वामजानौ दक्षिणे जायते सुखम् ॥ १० ॥
क्लेशकृद्वामजंघायां स्फिचि दक्षेऽर्थवृद्धिकृत् ।
स्फिचि वामे स्त्रीवियोगः पादे पर्यटनं भवेत् ॥ ११ ॥
पुरोभागे च दुर्वार्ता नष्टवार्ता च पृष्ठतः ।
वामे हानिर्धनं दक्षे परितो भ्रमणक्षतिः ॥ १२ ॥

वामदक्षविभागेन यत्फलं कथितं नृणाम् ।
विपर्ययेण तु स्त्रीणां ज्ञेयं शेषं द्वयोः समम् ॥ १३ ॥

इत्थं पल्ल्याः प्रतापस्य फलं ज्ञेयं विचक्षणैः ।
एतदेव फलं विद्यात्सरटस्य प्ररोहणे ॥ १४ ॥

पल्ल्याः प्ररोहणे रात्रौ सरटस्य प्रपातनम् ।
नातिदुष्टफलं विद्याद्व्याधिमुग्रं विपर्ययेत् ॥ १५ ॥

पतनानंतरं तस्यारोहणं यदि जायते ।
पतने फलमुत्कृष्टं विज्ञातव्यं विचक्षणैः ॥ १६ ॥

अथ शनिचक्रम् ।

शनिचक्रं नराकारं लिखेद्यत्र शनिर्भवेत् ।
तद्दक्षं च मुखे दत्त्वा यावन्नाम नरस्य च ॥ १ ॥

तावद्विचारयेत्तत्र ज्ञेयं शुभमथाशुभम् ।
एकं मुखे च नक्षत्रं चत्वारि दक्षिणे करे ॥ २ ॥

त्रयं त्रयं पादयोश्च वामहस्ते चतुष्टयम् ।
हृदये च त्रयं मौलौ नेत्रे गुह्ये द्वयं द्वयम् ॥ ३ ॥

हानिरास्ये दक्षहस्ते लाभो वामे च रोगता ।
हृदि श्रीर्मस्तके राज्यं पादे पर्यटनं भवेत् ॥ ४ ॥
नेत्रे सुखं गुदे मृत्युः शनिचक्रं विचारयेत ॥ ५ ॥

अथ पादविचारः ।

शनिभं जन्मभं चैश्यं चतुर्भिर्भागमाहरेत् ।
सौवर्णं लोहजं ताम्रं रौप्यं पादचतुष्टयम् ॥
जन्मे रसे रुद्रसुवर्णपादे द्विपंचनंदा रजतं शुभं च ।
त्रिसप्तमं दशमं ताम्रसंज्ञं तथा चतुर्थाष्टमरिष्फलोहमिति ॥

## अथ कष्टावली लिख्यते ।

| नक्षत्र | प्र.पाद.दि. | द्वि. पाद दि. | तृ. पा. दि. | चं. पा. दि. | नक्षत्रोंका दान |
|---|---|---|---|---|---|
| अश्विनी | ९ | ११ | १० | २० | भोजनदान |
| भरणी | ० | ८० | ४० | २१ | गोदाने |
| कृत्तिका | ९ | ११ | १६ | २८ | सुवर्णदान |
| रोहिणी | ७ | ९ | १८ | ३० | घृतदान |
| मृगशिर | ३० | ९ | २० | २१ | तिलदान |
| आर्द्रा | ८ | १८ | ० | ० | गोदान |
| पुनर्वसु | ७ | १४ | २ | २२ | पित्तलदान |
| पुष्य | ७ | ७ | २० | २१ | गोदान |
| आश्लेषा | ० | ० | ४१ | ० | चावलदान |
| मघा | १९ | १७ | १७ | २० | वस्त्रदान |
| पू. फा. | ० | १९ | ० | ३० | भोजनदान |
| उ. फा. | ७ | १४ | ० | ६० | तिलदान |
| हस्त | १९ | १७ | १९ | ० | अजादान |
| चित्रा | ११ | ९ | ९ | १६ | दुग्धदान |
| स्वाती | ६० | १७ | ३० | १२ | गोदान |
| विशाखा | १९ | ० | ४ | १३ | स्वर्णदान |
| अनुराधा | ६० | १२ | ३६ | ६० | घृतदान |
| ज्येष्ठा | ९ | ९ | ९ | ४६ | रजतदान |
| मूल | ९ | ९ | १९ | १ | रजतदान |
| पू. षा. | ० | १९ | २४ | १० | गोदान |
| उ. षा. | ३० | २४ | २६ | १६ | भजनदान |
| श्रवण | १० | २४ | ६ | ९ | भोजनदान |
| धनिष्ठा | १९ | ० | २० | २१ | महिषदान |
| शतभिषा | ० | ४९ | ३ | २२ | श्रीफलदान |
| पू. भा. | ० | १२ | २१ | १९ | भोजनदान |
| उ. भा. | १० | २ | ९ | १९ | घृतदान |
| रेवती | १८ | १० | १९ | २० | वृषभदान |

अथ अक्षरप्रश्न ।

## प्रश्नकर्ताकी अंगुली अक्षरपर रखवाय उसका फल कहै ।

| | | | |
|---|---|---|---|
| ओ | सुख सौभाग्य प्राप्ति होवे | ञ | संतान विरोध हानि |
| अ | सर्व कार्य सिद्धिप्राप्ति | ट | लाभ साधन सिद्धि |
| आ | शोक संताप दुःख | ठ | सर्वसिद्धि |
| इ | अतिसुख रोगका नाश | ड | शोक वृद्धि |
| ई | द्रव्यलाभ कार्यसिद्धि | ढ | वध व्याधि संताप |
| उ | संताप वियोग दुःख | ण | सकल विद्या धनप्राप्ति |
| ऊ | क्षितिलाभ कार्यसिद्धि | त | जलाशय लाभ |
| ऋ | सुवर्णप्राप्ति | थ | कार्यहानि रोग |
| ॠ | व्याधि संताप मित्रविरोध | द | धर्मलाभ सुखप्राप्ति |
| ऌ | मित्रलाभ आनंद | ध | धनप्राप्ति सुखप्राप्ति |
| ॡ | व्याधि कार्यहानि | न | लाभानंद प्राप्ति |
| ए | सर्वसिद्धि सुखप्राप्ति | प | धनव्यय कष्ट |
| ऐ | वधूविरोध रोग | फ | धन लाभ |
| ओ | दुःख शोक नाश कार्यसिद्धि | ब | धननाश शोक |
| औ | कार्यनाश मित्रविरोध | भ | सुख पुत्रलाभ |
| अं | दुःख शोक | म | कीर्तिनाश |
| अः | पशुभय | य | धनधान्यप्राप्ति |
| क | राज्यमान लाभ | र | विरोधहानि |
| ख | धनक्षय रोगवृद्धि | ल | धनागम रोगप्राप्ति |
| ग | कार्यसिद्धि मित्रप्रीति | व | धनक्षय अरिष्ट |
| घ | कार्यसिद्धि मित्रदर्शन | श | अर्थागम |
| ङ | कार्यनाश क्लेश | ष | चिंता कार्यनाश |
| च | राजमान वृद्धि | स | धान्यागम धनलाभ |
| छ | कार्यसिद्धि | ह | धनप्राप्ति |
| ज | कार्यहानि | क्ष | सर्वसिद्धि लाभ |
| झ | पशुलाभ | | इत्यक्षरप्रश्नः । |

## अवकहडाचक्रम् ।

| नक्षत्र | अक्षरराशयः | सर्पदं. | फल | देवता | मुख | नेत्र | संज्ञा | स्वरू. | स. |
|---|---|---|---|---|---|---|---|---|---|
| अश्विनी | चुचेचोला | ० | शुभ | अ. कु. | ति. मु. | मंद | क्षि. ल. | अश्वमुख | ३ |
| भरणी | लिलुलेलो | मृ. | नाश | यम | अधोमु. | मध्य | उ. क्रू. | योनिवत् | ३ |
| कृत्तिका | अइउए | मृ. | का. ना. | अग्नि | अधोमु. | सुलो. | मि. सा. | क्षुरवत् | ६ |
| रोहिणी | ओववितु | ० | सिद्धि | ब्रह्मा | ऊ. मु. | अंध. | ध्र. स्थि. | शकट | ५ |
| मृगशिर | वेवोककि | ० | शुभ | चंद्र | ति. मु. | मंद. | मृ. मै. | मृगास्य | ३ |
| आर्द्रा | कुघङछ | मृ. | शुभ | शिव | ऊ. मु. | मध्य | ती. दा. | मणि | १ |
| पुनर्वसु | केकोहहि | ० | मध्य | अदिति | ति. मु. | सुलो. | चरचल | गृहवत् | ४ |
| पुष्य | हुहेहोड | ० | शुभ | गुरु | ऊ. मु. | अंध. | क्षि. ल. | बाणा | ३ |
| आश्लेषा | डिडुडेडो | मृ. | शोक | सर्प्प | अधो. | मंद. | ती. दी. | चक्र | ५ |
| मघा | ममिमुमे | मृ. | नाश | पितर | अधो. | म. | उ. क्रू. | भवन | ५ |
| पू. फा. | मोटाटिटु | ० | अत्यु | भग | अधो. | सु. | उ. क्रू. | मंचक | २ |
| उ. फा. | टेटोपपि | ० | विद्या | अर्य्यमा | ऊ. मु. | अंध. | ध्र. स्थि. | शय्या | २ |
| हस्त | पुषणठ | ० | लक्ष्मी | सूर्य | ति. मु. | मंद. | मृ. मै. | हस्ताका | ५ |
| चित्रा | पेपोरारि | ० | शुभ | त्वष्टा | ति. मु. | मं. | मृ. मै. | मौक्तिक | १ |
| स्वाती | रुरेरोता | ० | अशुभ | वायु | ति. मु. | सुलो. | चर च. | प्रवाल | १ |
| विशाखा | तितुतेतो | मृ. | अशु. | इंद्राग्नी | अधोमु. | अंध | मि. सा. | तोरण | ४ |
| अनुराधा | ननिनुने | ० | सिद्धि | मित्र | ति. मु. | मंद | मृ. मै. | भक्तपुञ्ज | ४ |
| ज्येष्ठा | नोयायियु | ० | अर्थना | शुक्र | ति. मु. | मं. | ती. दा. | कुण्डल | ३ |
| मूल | येयोभाभी | मृ. | हानि | राक्षस | अधो. | सु. | ती. दा. | सिंहपु. | ११ |
| पू. षा. | भुधफढ | ० | हानि | उदक | अधो. | अं. | उ. क्रू. | गजदंत | २ |
| उ. षा. | भेभोजजि | ० | शु. | विश्वे | ऊ. मु. | मंद | ध्रु. स्थि. | मचक | २ |
| अभि | जुजेजोख | ० | शु. | ब्रह्म | ० | मध्य | क्षि. ल. | त्रिकोण | ३ |
| श्रवण | खिखुखेखो | ० | शु. | विष्णु | ऊर्ध्वमु. | सु. | च. च. | त्रिपाद | ३ |
| धनिष्ठा | गगिगुगे | ० | सुख | वसु | ऊ. मु. | अंध | च. च. | मृदंग | ४ |
| शतभिषा | गोससिसु | ० | कल्या. | वरुण | ऊ. मु. | मं. | च. च. | वर्तुल | १०० |
| पू. भा. | सेसोददि | ० | मृ. | अजैकप | अधोमु. | मध्य. | उ. क्रू. | मचक | २ |
| उ. भा. | दुथझञ | ० | ल. | अहिबु. | ऊ. मु. | सु. | ध्रु. स्थि. | यमला. | २ |
| रेवती | देदोचचि | ० | कमा. | पूषा | ति. मु. | अं. | मृ. मै. | मृदंग | ३२ |

## अथाक्षरतो राशिज्ञानार्थं चक्रम् ।

| मेष | वृष | मि. | कर्क | सिंह | कन्या | तुला | वृ. | धनु | मकर | कु. | मीन |
|---|---|---|---|---|---|---|---|---|---|---|---|
| चु | इ | क | हि | म | टो | र | तो | ये | भो खे | गु | दि |
| चे | उ | कि | हु | मि | पा | रि | न | यो | ज खो | गे | दु |
| चो | ए | कु | हे | मु | पि | रु | नि | भ | जि ग | गो | थ |
| ला | ओ | घ | हो | मे | पु | रे | नु | भि | जु गि | स | झ |
| लि | व | ङ | ड | मो | ष | रो | ने | भु | जे | सि | ञ |
| लु | वि | छ | डि | टा | ण | ता | नो | ध | जो | सु | दे |
| ले | वु | के | डु | टि | ठ | ति | य | फ | ख | से | दो |
| लो | वे | को | डे | टु | पे | तु | यि | ढ | खि | सो | च |
| अ | वो | ह | डो | टे | पो | ते | यू | भे | खु | दा | चि |

दशार्द्राद्या स्त्रियो हारा विशाखाद्या नपुंसकाः ।
मूलाच्चतुर्दश नरा नक्षत्राणि क्रमाद्बुधैः ॥ १ ॥

**अर्थ**—आर्द्रासे दश नक्षत्रोंमें वस्तु स्त्रीने हरी है। विशाखासे तीनतक नपुंसकने, मूलसे १४ पर्यंत पुरुषने वस्तु हरी है ॥ १ ॥

## अथ हृतवस्तुज्ञानार्थं चक्रम् ।

| | | |
|---|---|---|
| आर्द्रा पुन. पु. आश्लेषा मघा पू. फा. उ. फा. ह. चि स्वातिमें | विशाखा अनुराधा ज्येष्ठामें | मू. पू. षा. उ. षा. श्र. ध. श. पू. भा. उ. भा. रे. अ. भ. कृ. रो. मृगमें. |
| स्त्रीने वस्तु हरी है. | नपुंसकने वस्तु हरी है | पुरुषने वस्तु हरी है. |

## अंगुली रखवाकर फल कहे ।

| | | | |
|---|---|---|---|
| श्रीराम<br>स्थानका लाभ | सीता<br>धनकी प्राप्ति | लक्ष्मण<br>कार्यसिद्धि | विभीषण<br>सर्वलाभ |
| कुम्भकरण<br>मृत्यु | रावण<br>धननाश | अंगद<br>राज्यप्राप्ति | सुग्रीव<br>बन्धुदर्शन |
| हनुमान्<br>कार्यसिद्धि | जांबवन्त<br>दीर्घायु प्राप्ति | नारद<br>कलह | गुह<br>मित्रप्रीति |
| केकई<br>कार्यनाश | भरत<br>धनलब्धि | अर्जुन<br>सुखप्राप्ति | सुलक्षण<br>कार्यहानि |

| अथ स्वोदयाः । | | | अथ लङ्कोदयाः । | | |
|---|---|---|---|---|---|
| मे. | २०३ | मी. | मे. | २७८ | मी. |
| वृ. | २३९ | कुं. | वृ. | २९९ | कुं. |
| मि. | २९८ | म. | मि. | ३२३ | म. |
| क. | ३४८ | ध. | क. | ३२३ | ध. |
| सिं. | ३५९ | वृ. | सिं. | २९९ | वृ. |
| क. | ३९३ | तु | क. | २७८ | तु |

अथ वर्णचक्रम् ।

| ब्राह्मण | क्षत्रिय | वैश्य | शूद्र |
|---|---|---|---|
| मी. वृ. क. | मे. सिं. ध. | वृ. क. म. | मि. तु. कुं. |

अथ दुष्टस्वप्नदर्शने शांतिर्लिख्यते ।

दुष्टे त्वालोकिते स्वप्ने निवेद्य ब्राह्मणाय च। आशीर्भिस्तोपितो विप्रैः पुनः स्वप्यान्नरेश्वरः ॥ १ ॥ न ब्रूयाच पुनः स्वप्नंस्नायात्पुण्यैस्तु वारिभिः । कार्यो

मृत्युंजयो होमः शांतिः स्वस्त्ययनादिका । सेवाऽश्वत्थगवां प्रातर्दानं स्वर्णादि शक्तितः ॥ २ ॥ श्रवणं भारतादीनां स्वप्नदोषनिवृत्तये । बृहस्पतिप्रणीतं च स्वामाध्यायं विचारयेत् ॥ ३ ॥

अथ संक्रांतिषु स्नानदानादि निरूप्यते ।

रविसंक्रमणे पुण्ये यो न स्नातीह मानवः । सप्तजन्मांतरे रोगी दुःखभाङ्निर्धनो भवेत् ॥ १ ॥ स्मृतिचंद्रिकायां यथा-" संक्रांत्यां यानि दत्तानि हव्यकव्यानि मानवैः । तानि तस्य ददात्यर्कः सप्तजन्मनि निश्चितम् ॥ २ ॥ दत्तानि यानि दानानि हव्यकव्यानि संक्रमे । अपामिव समुद्रस्य तेषामन्तो न विद्यते ॥ ३ ॥" आदित्य-पुराणे-"शतमिन्दुक्षये दानमुपरागे त्वनन्तकम् । षडशीत्यां सहस्रं तु विषुवत्यां तथैव च ॥ १ ॥ विषुवे शतसाहस्रं कोटिशो दक्षिणायने । शतकोटिगुणं पुण्यं जायते तूत्तरायणे ॥ २ ॥ सौम्यायने नूतनभाण्डदानं गोग्रासमन्नं तिलपात्रमर्थम् । गुडाज्यतैलोर्णसुवर्णभूमिं गोवाजिवस्त्रप्रभृतींश्च दद्यात् ॥ ३ ॥

अथ स्नानम् ।

कुंकुमं रोचनं मांसीसुराचन्दवालुकम् । हरिद्राचन्द्रसंयुक्तं मेषे स्नानं महाफलम् ॥ १ ॥ कुंकुमैलासुसिद्धार्थरोचनाघनसारकैः । सितगोमूत्रसंयुक्तैर्वृषे स्नानं सुखार्थ-दम् ॥ २ ॥ उशीरं पद्मकं कुष्ठं रोचनाग्रंथिपर्णकम् । कुंकमागरुसंयुक्तं मिथुने राज्यदं परम् ॥ ३ ॥ रोचनं वालुकं मुस्तासुराशैलेयचंदनम् । हरिद्राकुष्ठसंयुक्तं कर्कसंक्रमणे शुभम् ॥ ४ ॥ पत्रकं रोचनं मुस्तं मांसी त्वगथ चंदनम् । सिंहे स्नानं सुराध्यक्षं राज्यायुः पुत्रवर्द्धनम् ॥ ५ ॥ हरिद्रा वालुकं कुष्ठं मांसी चंदनरोचनम् । कन्यास्नानं प्रकर्तव्यं रतिसंतानवर्धनम् ॥ ६ ॥ रोचना तगरं कुष्ठं पद्मकोशीरपत्रकम् । हरिद्रावालसंयुक्तं तुलायां स्नानमुत्तमम् ॥ ७ ॥ प्रियंगुस्फटिकं मांसी पत्रकं रोच-नागरुः । मुस्ताकुष्ठसमं स्नानं वृश्चिके राज्यदं मतम् ॥ ८ ॥ प्रवालं मौक्तिकं कुष्ठं रोचना घनपद्मकम् । सुरामांसी समं स्नानं धनु संक्रमणे शुभम् ॥ ९ ॥ रोचना वालकं कुष्ठं पद्मकोशीरपत्रकम् । हरिद्रावालसंयुक्तं मकरे सर्वकामदम् ॥ १० ॥ ग्रन्थिपर्णं तथैला च केशरं जातिपत्रकम् । रोचनां सहितं स्नानं कुम्भे पुत्रायूराज्य-

द्मू ॥ ११ ॥ कर्पूरफलसूक्ष्मैलामांसीचन्दनपद्मकम् । वालकं सघनोशीरत्वचं मीने सुखावहम् ॥ १२ ॥ द्वादशैते समाख्याताः स्नानानि स्युः सुरार्चिताः । अलक्ष्मीनाशना धन्या महापातकनाशनाः ॥ १३ ॥ इति ॥

इति कर्पूरस्थलनिवासिगौतमगोत्र ( शौरि ) अन्वयालंकृतिदैवज्ञदुनिचंद्रात्मज पं० विष्णुदत्तवैदिककृत प्रकीर्णाध्यायः समाप्तः ।

शुभमस्तु श्रीरामचंद्रप्रसादात् ।

---

पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम्-प्रेस,
कल्याण-बंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम्-प्रेस,
खेतवाडी-बंबई.



# सावधान !

—:o:—

जैसा कि आप में से हमारे अनेक कृपालु ग्राहकों, अनुग्राहकों और शुभैषियों को विदित है, हमारी अपनी दो मुद्रण संस्थायें हैं। (१) खेमराज श्रीकृष्णदास 'श्रीवेङ्कटेश्वर स्टीम् प्रेस' के नाम से बम्बई में और (२) गंगाविष्णु श्रीकृष्णदास 'लक्ष्मीवेंकटेश्वर प्रेस' के नाम से कल्याणमें स्थित है। दोनों ही का संचालन, प्रकाशन व मुद्रण कार्य्य भगवान् श्रीवेंकटेशजीकी कृपा से सर्वाधिकारपूर्वक हम स्वतः करते हैं। हमारे उक्त प्रेसों से प्रकाशित सभी पुस्तकों के मुद्रणाधिकार (Copyrights) सुरक्षित हैं। अतः कोई भी अनधिकृत चेष्टा करनेवाले महानुभाव अपने अवैध दुस्साहस के लिये स्वयं उत्तरदायी होंगे।

देखा गया है कुछ अर्थलोलुप स्वार्थी लोग आपको आपके हिताहित का ध्यान न रखते हुये हमारे यहां से प्रकाशित पुस्तकों के स्थान पर अन्यत्र की छपी हुई अशुद्ध, भ्रामक और अपूर्ण पुस्तकें-बम्बई की छपी हुई कह कर गले लगा कर अपना स्वार्थ साधन करते हैं जिसकी वास्तविकता का पता लगनेपर आर्थिक हानि के साथ साथ आपको पछताना पड़ता है। अतः हम आपको सावधान करते हैं कि कोई भी पुस्तक खरीदने से पूर्व उसपर छपे हुये हमारे नाम "खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम् प्रेस, बम्बई" अथवा "गंगाविष्णु श्रीकृष्णदास, लक्ष्मीवेंकटेश्वर प्रेस, कल्याण (बम्बई) छपा हुवा देखकर ही पुस्तक खरीदें। कभी धोका न होगा। इतने पर भी यदि धोका हो तो खरीदी हुई पुस्तक और जहां से आपने उसे खरीदा हो उसका कैश मीमों या बिल सीधा हमारे पास भेज दें। हम आपको विश्वास दिलाते हैं—ऐसे धोकेबाजों के प्रति कठोर कानूनी कार्य्यवाही की जायगी और जनता को उचित दामों में असली माल मिलने में कठिनता न होगी।

निवेदक—

गंगाविष्णु श्रीकृष्णदास,
लक्ष्मीवेङ्कटेश्वर स्टीम् प्रेस,
कल्याण (बम्बई).

खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम् प्रेस,
बम्बई.